वे० ॥श्रीगणेशायनमः॥ यदविद्याविलासेनभूतभौतिकसृष्टयः तंनौमिपरमात्मानंसच्चिदानंदविग्रहं १ यदंतेवासिपंचास्यैर्निरस्ता
प० भेदिवारणाः तंप्रणौमिनृसिंहाख्यंयतींद्रंपरमंगुरुं २ श्रीमद्वेंकटनाथाख्यान्वेलांगुडिनिवासिनः जगद्गुरूनहंवंदे सर्वतंत्र
१ प्रवर्तकान् ३ येनचिंतामणौटीकादशटीकाविभंजनी तर्कचूडामणिर्नामकृताविद्वन्मनोरमा ४ तेनबोधायमंदानांवेदांतार्था
वलंबिनी धर्मराजाध्वरींद्रेणपरिभाषावितन्यते ५ इहखलुधर्मार्थकाममोक्षाख्येषुचतुर्विधपुरुषार्थेषुमोक्षएवपरमपु
रुषार्थः नसपुनरावर्ततेइतिश्रुत्यातस्यनित्यत्वावगमात् इतरेषांत्रयाणांप्रत्यक्षेणतद्यथेहकर्मजितोलोकःक्षीयते एवमेवामुत्र
पुण्यजितोलोकःक्षीयत इत्यादिश्रुत्याचानित्यत्वावगमात् सचब्रह्मज्ञानादिति ब्रह्मतज्ज्ञानंतत्प्रमाणंचसप्रपंचंनिरूप्यते त
त्रप्रमाकरणंप्रमाणं तत्रस्मृतिव्यावृत्तंप्रमात्वमनधिगताबाधितार्थविषयज्ञानत्वं स्मृतिसाधारणंत्वबाधितार्थविषयकज्ञानत्वं
नीरूपस्यापिकालस्येंद्रियवेद्यत्वाभ्युपगमेन धारावाहिकबुद्धेरपिपूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविशिष्टविषयकत्वेन
नतत्राव्याप्तिः किंचसिद्धांतेधारावाहिकबुद्धिस्थलेनज्ञानभेदः किंतुयावत्घटस्फुरणंतावत्घटाकारांतःकरणवृत्तिरेकैव न
तुनानावृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यंतंस्थायित्वाभ्युपगमात् तथाच तत्प्रतिफलितचैतन्यरूपंघटादिज्ञानमपितत्रतावत्का
लीनमेकमेवेतिनाव्याप्तिशंकापि ननुसिद्धांतेघटादेःमिथ्यात्वेनबाधितत्वात् तज्ज्ञानंकथंप्रमाणंउच्यते ब्रह्मसाक्षात्कारा
नंतरंहिघटादीनांबाधः यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिश्रुतेः नतुसंसारदशायांबाधः यत्रहिद्वैतमिवभवति॥

तदितरद्भूतरं पश्यतीतिश्रुतेः तथाचाबाधितपदेन संसारदशायामबाधितत्वं विवक्षितमिति न घटादिप्रमाणामव्याप्तिः तदुक्तं
देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयादिति आत्मनिश्चयात् ब्रह्मसाक्षात्कारपर्यंत
मित्यर्थः लौकिकमिति घटादिज्ञानमित्यर्थः तानि च प्रमाणानि च षट् प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिभेदा
त् तत्र प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणं प्रत्यक्षप्रमा चात्र चैतन्यमेव यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुतेः अपरोक्षादि
त्यस्यापरोक्षमित्यर्थः ननु चैतन्यमनादि तत्कथं चक्षुरादेस्तत्करणत्वेन प्रमाणत्वमिति उच्यते चैतन्यस्यानादित्वेपि तद
भिव्यंजकांतःकरणवृत्तिरिंद्रियसन्निकर्षादिना जायते इति वृत्तिविशिष्टं चैतन्यमादिमदित्युच्यते ज्ञानावच्छेदकत्वाच्च वृ
त्तौ ज्ञानत्वोपचारः तदुक्तं विवरणे अंतःकरणवृत्तौ ज्ञानत्वोपचारादिति ननु निरवयवस्यांतःकरणस्य परिणामात्मिका वृ
त्तिः कथमित्थं न तावदंतःकरणं निरवयवं सादिद्रव्यत्वेन सावयवत्वात् सादित्वं तन्मनोऽसृजतेत्यादिश्रुतेः वृत्तिरूपज्ञान
स्य मनोधर्मत्वे च कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेतिश्रुतिमानं धीश
ब्देन वृत्तिरूपज्ञानाभिधानात् अतएव कामादेर्मनोधर्मत्वं ननु कामादेरंतःकरणधर्मत्वेऽहमिच्छाम्यहं जानाम्यहं बिभे
मीत्याद्यनुभव आत्मधर्मत्वमवगाहमानः कथमुपपद्यते उच्यते अयःपिंडस्य दग्धृत्वाऽभावेपि दग्धृत्वाश्रयवह्नितादात्म्या
ध्यासात् यथा अयो दहतीति व्यवहारस्तथा सुखाद्याकारपरिणाम्यंतःकरणैक्याध्यासात् अहं सुखी दुःखीत्यादिव्यवहारः

वे० ननु अंतःकरणस्येंद्रियतयाऽतींद्रियत्वात्कथमहमितिप्रत्यक्षविषयतेति उच्यते नतावदंतःकरणमिंद्रियमित्यत्रमानमस्ति।
प० मनःषष्ठानींद्रियाणीति भगवद्गीतावचनंप्रमाणमितिचेत् न अनिंद्रियेणापिमनसाषट्त्वसंख्यापूरणाऽविरोधात् नहींद्रि
२ यगतसंख्यापूरणमिंद्रियेणैवेतिनियमः यजमानपंचमाइडांभक्षयंतीत्यत्र ऋत्विग्गतपंचत्वसंख्यायाअनृत्विजापियज
मानेन वेदानध्यापयामासमहाभारतपंचमानित्यत्रवेदगतपंचत्वसंख्याया अवेदेनापि महाभारतेनपूरण दर्शनात्॥
इंद्रियेभ्यः पराह्यर्थाह्यर्थेभ्यश्चपरंमनः इत्यादिश्रुत्या मनसोऽनिंद्रियत्वेनावगमाच्च नचैवंमनसोऽनिंद्रियत्वेसुखादिप्रत्य
क्षस्यसाक्षात्त्वंनस्यादिंद्रियाजन्यत्वादितिवाच्यं नहींद्रियजन्यत्वेनज्ञानस्यसाक्षात्त्वं अनुमित्यादेरपिमनोजन्यतयासा
क्षात्वापत्तेः ईश्वरज्ञानस्याजन्यस्यासाक्षात्वापत्तेश्च सिद्धांतेप्रत्यक्षत्वप्रयोजकं किमितिचेत् किंज्ञानगतस्यप्रत्यक्षत्व।
स्यप्रयोजकंपृच्छसि किंवाविषयगतस्य आद्येप्रमाणचैतन्यस्यविषयावच्छिन्नचैतन्याऽभेदइतिब्रूमः तथाहि त्रिविधंचै
तन्यंप्रमातृचैतन्यंप्रमाणचैतन्यं विषयचैतन्यंचेति तत्रघटाद्यवच्छिन्नचैतन्यंविषयचैतन्यं अंतःकरणवृत्त्यवच्छिन्नंचैत प०
न्यंप्रमाणचैतन्यं अंतःकरणावच्छिन्नंचैतन्यंप्रमातृचैतन्यं तत्र यथा तडागोदकंछिद्रान्निर्गत्यकुल्यात्मनाकेदारान्प्रवि २
श्यतद्वदेवचतुःकोणाद्याकारंभवति तथातैजसमंतःकरणमपिचक्षुरादिद्वाराघटादिविषयदेशंगत्वाघटादिविषया।
द्याकारेणपरिणमते सएवपरिणामोवृत्तिरित्युच्यते अनुमित्यादिस्थलेतुनांतःकरणस्यवह्न्यादिदेशगमनं वह्न्यादेश्चक्षुरा

द्युसंनिकर्षात् तथा चायं घट इत्यादिप्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च बहिरेकत्र देशे समवधानात् ——— तदुभयाव
च्छिन्नं चैतन्यमेकमेव विभाजकयोरपि अंतःकरणवृत्तिघटादिविषययोरेकस्थत्वेन भेदाजनकत्वात् अत एव मठांतर्वर्ति घटाव
च्छिन्नाकाशेन मठावच्छिन्नाकाशश्छिद्यते तथा चायं घट इति प्रत्यक्षस्थले घटाकारवृत्तेर्घटसंयोगितया घटावच्छिन्नचैत।
न्यात्तद्वृत्त्यवच्छिन्नचैतन्यस्याऽभिन्नतया तत्र घटज्ञानस्य घटांशे प्रत्यक्षत्वं सुखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैत।
न्यस्य च नियमेनैकदेशस्थितोपाधिद्वयावच्छिन्नत्वात् नियमेनाहं सुखीत्यादिज्ञानस्य प्रत्यक्षत्वं नन्वेवं स्ववृत्तिसुखादिस्म
रणस्यापि सुखाद्यंशे प्रत्यक्षत्वापत्तिरिति चेन्न तत्र स्मर्यमाणसुखस्यातीतत्वेन स्मृतिरूपांतःकरणवृत्तेर्वर्तमानत्वेन तत्रोपा
ध्योर्भिन्नकालीनतया तत्तदवच्छिन्नचैतन्ययोर्भेदात् उपाध्योरेकदेशस्थत्वस्येवैककालीनत्वस्यैवोपाधेयाऽभेदप्रयोजक
त्वात् यदि चैकदेशस्थत्वमात्रमुपधेयाभेदप्रयोजकं तदाहं पूर्वं सुखीत्यादिस्मृतावतिव्याप्तिवारणाय वर्तमानत्वं विषय
विशेषणं देयं नन्वेवमपि स्वकीयधर्माधर्मौ वर्तमानौ तौ यदा शब्दादिना ज्ञायेते तदा तादृशशाब्दज्ञानादावतिव्याप्तिः तत्र
धर्माद्यवच्छिन्नतद्वृत्त्यवच्छिन्नचैतन्ययोरेकत्वादिति चेन्न योग्यत्वस्यापि विषयविशेषणत्वात् अंतःकरणधर्मत्वाऽविशेषे
पि किंचिद्योग्यं किंचिदयोग्यमित्यत्र फलबलकल्प्यः स्वभाव एव शरणं अन्यथा न्यायमते व्याप्तगुणत्वात् सुखादिवद्धर्मा
देरपि प्रत्यक्षत्वापत्तिर्दुर्वारा नन्वेवमपि वर्तमानतादशायां त्वं सुखीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षता स्यादिति वाच्यं इष्टत्वात्

वे॰ दशमस्त्वमसीत्यादौ सन्निकृष्टविषये शब्दादप्यपरोक्षज्ञानाभ्युपगमात् अतएव पर्वतो वह्निमानित्यादिज्ञानमपि वह्न्यंशे परोक्षं
प॰ पर्वतांशेऽपरोक्षं पर्वताद्यवच्छिन्नचैतन्यस्य बहिर्निःसृतान्तःकरणवृत्त्यवच्छिन्नचैतन्याभेदात् वह्न्यंशे तदन्तःकरणवृत्तिनिर्गम
३ नाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमाणचैतन्यस्य च परस्परं भेदात् तथा चानुभवः पर्वतं पश्यामि वह्निमनुमिनोमीति न्यायमते
तु पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिः असन्निकृष्टपक्षकानुमितौ तु सर्वांशेपि ज्ञानं परोक्षं सुरभि चन्दनमित्यादिज्ञानमपि चं
दनखण्डांशे अपरोक्षं सौरभांशे तु परोक्षं सौरभस्य चक्षुरिन्द्रियायोग्यतया योग्यत्वघटितस्य निरुक्तलक्षणस्याभावात् न चैव
मेकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरभ्युपगमे तयोर्जातित्वं न स्यादिति वाच्यं इष्टत्वात् जातित्वोपाधित्वपरिभाषायाः सकल
प्रमाणागोचरतया अप्रामाणिकत्वात् घटोयमित्यादिप्रत्यक्षं हि घटत्वादिसद्भावे मानं न तु तस्य जातित्वेपि जातित्वरूप
साध्याऽप्रसिद्धेस्तत्साधकानुमानस्याप्यनवकाशात् समवायासिध्या ब्रह्मभिन्ननिखिलप्रपंचस्यानित्यतया च नित्यत्व
सम चेतत्त्वघटितजातित्वस्य घटत्वादावसिद्धेश्च एवमेवोपाधित्वमपि निरसनीयं पर्वतो वह्निमानित्यादौ च पर्वतांशे व प॰
ह्न्यंशे चान्तःकरणवृत्तिभेदाङ्गीकारेण तत्तद्वृत्त्यवच्छेदकभेदेन परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये वृत्तौ न विरोधः तथा च ३
तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वं घटादेर्वि
षयस्य प्रत्यक्षत्वं तु प्रमात्रभिन्नत्वं ननु घटादेरन्तःकरणावच्छिन्नचैतन्याऽभेदः अहमिमं पश्यामीति भेदानुभवविरोधात्

दितिचेत् उच्यते प्रमात्र भेदोनामनतावदैक्यं किंतुप्रमातृसत्तातिरिक्तसत्ताकत्वाभावः तथाच घटादेः स्वाऽवच्छिन्नचै
तन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता अधिष्ठानसत्तातिरिक्ताया आरोपितसत्ताया अनंगीकारात् विषयचै
तन्यंच पूर्वोक्तप्रकारेण प्रमातृचैतन्यमेवेति प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानं तथा प्रमातृसत्तैव घटादिसत्तानान्येति सि
द्धं घटादेरपरोक्षत्वं अनुमित्यादिस्थलेतु अंतःकरणस्य वह्न्यादिदेशनिर्गमाऽभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्या
नात्मकतया वह्न्यादिसत्ता प्रमातृसत्तातो भिन्नेति नातिव्याप्तिः नन्वेवमपि धर्माधर्मादिगोचरानुमित्यादिस्थले धर्माधर्मयोः
प्रत्यक्षत्वापत्तिः धर्माद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्मादिसत्तायाः प्रमातृसत्ताऽनतिरेकादितिचेन्न यो
ग्यत्वस्यापि विषयविशेषणत्वात् नन्वेवमपि रूपी घट इति प्रत्यक्षस्थले घटगतपरिमाणादेः प्रत्यक्षत्वापत्तिः रूपाद्यव
च्छिन्नचैतन्यस्य परिमाणावच्छिन्नचैतन्यस्य चैकतया रूपाद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याऽभेदे परिमाणाद्यवच्छिन्न
चैतन्यस्यापि प्रमातृभिन्नतया परिमाणसत्तायाः प्रमातृसत्तातिरिक्तत्वाऽभावादितिचेन्न तत्तदाकारवृत्त्युपहितत्वस्या
पि प्रमातृविशेषणत्वात् रूपाकारवृत्तिदशायां परिमाणाकारवृत्त्यभावेन परिमाणाकारवृत्त्युपहितप्रमातृचैतन्याभिन्न
सत्ताकत्वाऽभावेनातिव्याप्त्यभावात् नन्वेवं वृत्तावव्याप्तिः अनवस्थाभियावृत्तिगोचरवृत्त्यनंगीकारेण तत्र स्वाकारवृत्त्युप
हितत्वघटितोक्तलक्षणस्य अभावादितिचेन्न अनवस्थाभियावृत्तेर्वृत्त्यंतराऽविषयत्वेपि स्वविषयत्वाभ्युपगमेन स्वविषय

वे॰ त्त्युपहितप्रमातृचैतन्याऽभिन्नसत्ताकत्वस्य तत्रापि भावात् एवंचांतःकरणतद्धर्मादीनां केवलसाक्षिविषयत्वमपितुतदा
प॰ कारवृत्त्यभ्युपगमेनोक्तप्रत्यक्षलक्षणस्य तत्रापि सत्त्वान्नाव्याप्तिः नचांतःकरणतद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे के
४ वलसाक्षिवेद्यत्वाभ्युपगमविरोध इति वाच्यं नहि वृत्तिंविना साक्षिविषयत्वं केवलसाक्षिवेद्यत्वं किंत्विंद्रियानुमाना
दिप्रमाणव्यापारमंतरेण साक्षिविषयत्वं अतएवाहंकारटीकायामाचार्यैरहमाकारांतःकरणवृत्तिरंगीकृता अत
एवच प्रातिभासिकरजतस्थले रजताकाराऽविद्यावृत्तिः सांप्रदायिकैरंगीकृता तथाचांतःकरणतद्धर्मादिषु केवलसा
क्षिवेद्येषु वृत्त्युपहितत्वघटितलक्षणस्य सत्त्वान्नाव्याप्तिः तदयं निर्गलितार्थः स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्ता
तिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वं तत्र संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभि
व्यंजकवृत्तिजनने विनियोगः साच वृत्तिः चतुर्विधा संशयो निश्चयो गर्वः स्मरणमिति एवंविधवृत्तिभेदेन एकमप्यं
तःकरणं मन इति बुद्धिरिति अहंकार इति चित्तमिति व्याख्यायते तदुक्तं मनोबुद्धिरहंकारश्चित्तं करणमांतरं संशयो निश्च ग॰
यो गर्वः स्मरणं विषया इमे तच्च प्रत्यक्षं द्विविधं सविकल्पकनिर्विकल्पकभेदात् तत्र सविकल्पकं वैशिष्ट्यावगाहि ज्ञानं। ४
यथा घटमहं जानामीत्यादिज्ञानं निर्विकल्पकं तु संसर्गानवगाहि ज्ञानं यथा सोयं देवदत्तः तत्त्वमसीत्यादिवाक्यजन्य
ज्ञानं ननु शाब्दमिदं ज्ञानं न प्रत्यक्षं इंद्रियाजन्यत्वादिति चेन्न नहि इंद्रियजन्यत्वं प्रत्यक्षत्वे तंत्रं दूषितत्वात् किंतु प्रमाण

चैतन्यस्य योग्यवर्तमानविषयचैतन्याभिन्नत्वमित्युक्तं तथाच सोयं देवदत्त इति वाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया बहि
निःसृतांतःकरणवृत्त्यभ्युपगमेन देवदत्तावच्छिन्नचैतन्यवृत्त्यवच्छिन्नचैतन्ययोरभेदेन सोयं देवदत्त इति वाक्यजन्यज्ञाने
स्य प्रत्यक्षत्वं एवं तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्यापि तत्र प्रमातुरेव विषयतया तदुभयाऽभेदस्य सत्वात् ननु वाक्यजन्य
ज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वं उच्यते वाक्यजन्यज्ञान विषयत्वे हि न पदार्थसंसर्गत्वं तंत्रं अन
भिमतसंसर्गस्यापि वाक्यजन्यज्ञानविषयत्वापत्तेः किंतु तात्पर्यविषयत्वं प्रकृते च सदेव सोम्येदमग्र आसीदिति उपक्रम्य
तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्युपसंहारेण विशुद्धे ब्रह्मणि वेदांतानां तात्पर्यमवसितमिति कथं तात्पर्यविष
यसंसर्गमवबोधयेत् इदमेव तत्त्वमस्यादिवाक्यानामखंडार्थत्वं यत्संसर्गानवगाहियथार्थज्ञानजनकत्वमिति तदुक्तं
संसर्गासंगिसम्यग्धीहेतुता या गिरामियं उक्ताऽखंडार्थता यद्वा तत्प्रातिपदिकार्थता प्रातिपदिकार्थमात्रपरत्वं वाऽखंडा
र्थत्वमिति चतुर्थपादार्थः तत्र प्रत्यक्षं पुनर्द्विविधं जीवसाक्षी ईश्वरसाक्षी चेति तत्र जीवो नामांतःकरणावच्छिन्नं चैतन्यं त
त्साक्षी तु अंतःकरणोपहितं चैतन्यं अंतःकरणस्य विशेषणत्वोपाधित्वाभ्यामनयोर्भेदः विशेषणं च कार्यान्वयि व्यावर्त
कं उपाधिश्च कार्यानन्वयि व्यावर्तकः वर्तमानश्च रूपविशिष्टो घटोऽनित्य इत्यत्र रूपं विशेषणं कर्णशष्कुल्यवच्छिन्नं नभः
श्रोत्रमित्यत्र कर्णशष्कुलिरुपाधिः अयमेवोपाधिर्नैयायिकैः परिचायक इत्युच्यते प्रकृते चांतःकरणस्य जडतया विषय

वे० भासकत्वायोगेन विषयभासकचैतन्योपाधित्वं अयं च जीवसाक्षी प्रत्यात्मं नाना एकत्वे मैत्रावगते चैत्रस्याप्यनुसंधानप्रसंगः
प० ईश्वरसाक्षी तु मायोपहितं चैतन्यं तच्चैकं तदुपाधिभूतमायाया एकत्वात् इंद्रो मायाभिः पुरुरूप ईयते इत्यादिश्रुतौ माया
५ भिरिति बहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतया चोपपत्तेः मायां तु
प्रकृतिं विद्यान्मायिनं तु महेश्वरं अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः अजो ह्येको जुषमा।
णोनुशेते जहात्येनां भुक्तभोगामजोन्यः तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते योगी मायाममेयाय तस्मै विद्यात्म
ने नमः इत्यादिश्रुतिस्मृतिषु एकवचनबलेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते ततश्च तदुपहितचैतन्यं ई
श्वरसाक्षी तच्चानादि तदुपाधेर्मायाया अनादित्वात् मायावच्छिन्नं चैतन्यं च परमेश्वरः मायाया विशेषणत्वे ईश्वरत्वं उपा
धित्वे साक्षित्वमिति ईश्वरसाक्षित्वयोर्भेदः न तु धर्मिणोः ईश्वरतत्साक्षिणोः स च परमेश्वर एकोपि स्वोपाधिभूतमाया
निष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वर इत्यादिशब्दवाच्यतां भजते ॥ ननु ईश्वरसाक्षिणोनादित्वे तदैक्षत बहु ए०
स्यां प्रजायेयेत्यादिसृष्टिपूर्वसमये परमेश्वरस्यागंतुकमीक्षणमुच्यमानं कथमुपपद्यते उच्यते यथा विषयेंद्रियसन्निक। ५
र्षादिकारणवशेन जीवोपाधि अंतःकरणस्य वृत्तिभेदाः जायंते तथा सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधिभूतमा
यायावृत्तिविशेषा इदमिदानीं स्रष्टव्यमिदमिदानीं पालयितव्यमिदमिदानीं संहर्तव्यमित्याद्याकारा जायंते तासां च वृत्ती

नांसादित्वात्तत्प्रतिबिंबचैतन्यमपिसाक्षीत्युच्यते एवंसाक्षिद्वैविध्येनप्रत्यक्षज्ञानेद्वैविध्यं प्रत्यक्षत्वंच ज्ञेयगतंज्ञप्तिगतंचे
तिनिरूपितं तत्रज्ञप्तिगतप्रत्यक्षत्वस्यसामान्यलक्षणंचित्वमेव पर्वतोवह्निमानित्यादावपिवह्न्याद्याकारवृत्त्युपहितचै
तन्यस्यस्वात्मांशे स्वप्रकाशतयाप्रत्यक्षत्वात् तत्तद्विषयांशेप्रत्यक्षत्वंतुपूर्वोक्तमेव तस्यचभ्रांतिरूपप्रत्यक्षेनातिव्याप्तिः
भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचनेतस्यापिलक्ष्यत्वात् यदातुप्रत्यक्षप्रमायाएवलक्षणंवक्तव्यंतदापूर्वोक्त
लक्षणेऽबाधितत्वंविषयविशेषणं देयं शुक्तिरूप्यादिभ्रमस्यसंसारकालीनबाधविषयप्रातिभासिकरजतादिवि
षयकत्वात् ननुविसंवादिप्रवृत्त्याभ्रांतिज्ञानसिद्धावपितस्यप्रातिभासिकतत्कालोत्पन्नरजतादिविषयकत्वेनप्रमाणं
देशांतरीयरजतस्यज्ञप्तस्यैवतद्विषयत्वसंभवादितिचेन्न तस्यासन्निकृष्टतयाप्रत्यक्षविषयत्वायोगात् नचज्ञानंतत्र
प्रत्यासत्तिः ज्ञानस्यप्रत्यासत्तित्वेततएववह्न्यादेःप्रत्यक्षत्वापत्तौअनुमानाद्युच्छेदापत्तेः ननुरजतोत्पादकानां रजतावय
वानामभावेशुक्तौकथंतत्रापिरजतमुत्पद्यतेइतिचेत् उच्यते नहिलोकसिद्धसामग्रीप्रातिभासिकरजतोत्पादिका किं
तुविलक्षणैव तथाहि काचकामलादिदोषदूषितलोचनस्यपुरोवर्तिद्रव्यसंयोगादिदमाकाराचाकचक्याकाराकाचिदं
तःकरणवृत्तिरुदेति तस्यांचवृत्ताविदमवच्छिन्नचैतन्यंप्रतिबिंबते तत्रपूर्वोक्तरीत्यावृत्तेर्निर्गमनेनेदमवच्छिन्नचैतन्यं
वृत्त्यवच्छिन्नचैतन्यंप्रमातृचैतन्यंचाऽभिन्नंभवति ततश्चप्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठशुक्तित्वप्रकारिकाऽवि

वे० प० ६

द्याचाकचक्यादिसादृश्यसंदर्शनसमुद्बोधितरजतसंस्कारसध्रीचीनाकाचादिदोषसमवहितारजतरूपार्थाकारेणरज
तज्ञानाभासाकारेणचपरिणमते परिणामोनामउपादानसमसत्ताककार्योपत्तिः विवर्तोनामउपादानविषमसत्ताककार्यो
पत्तिः प्रातिभासिकरजतंचाविद्यापेक्षयापरिणाम चैतन्यापेक्षयाविवर्तइतिचोच्यते अविद्यापरिणामरूपंचतद्रजतम
विद्याधिष्ठानेइदमवच्छिन्नचैतन्येवर्तते अस्मन्मतेसर्वस्यापिकार्यस्यस्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात्॥
ननुचैतन्यनिष्ठस्यरजतस्यकथं इदंरजतमिति पुरोवर्तितादात्म्यं उच्यतेयथा न्यायमते आत्मनिष्ठस्यसुखादेःशरीर
निष्ठत्वेनोपलंभः शरीरस्यसुखाधिकरणावच्छेदकत्वात् तथाचैतन्यमात्रस्यरजतंप्रत्यनधिष्ठानतया इदमवच्छिन्नचै
तन्यस्यतदधिष्ठानत्वेनेदमोवच्छेदकतयारजतस्यपुरोवर्तिसंसर्गप्रत्ययउपपद्यते तस्यचविषयचैतन्यस्यांतःकरणो
पहितचैतन्याभिन्नतयाविषयचैतन्याध्यस्तमपिरजतंसाक्षिण्यध्यस्तंकेवलसाक्षिवेद्यंसुखादिवदनन्यवेद्यमितिचो
च्यते ननुसाक्षिण्यध्यस्तत्वेऽहंरजतमितिप्रत्ययःस्यात् अहंसुखीतिवदितिचेदुच्यते नहिसुखादीनामंतःकरणाव
च्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वप्रयुक्तमहंसुखीति ज्ञानंसुखादीनां घटादिवच्छुद्धचैतन्यएवाध्यासात् किंतुयस्यय
दाकारानुभवसंस्कारसहकृताविद्याकार्यत्वंतस्यतदाकारानुभवविषयत्वमितिसर्वानुगतंनियामकम् तथाचेदमाका
रानुभवसंस्कारसहकृताविद्याकार्यत्वात् घटादेरिदमाकारानुभवविषयत्वमऽहमाकारानुभवाहितसंस्कारसहिता रा० ६

विद्याकार्यत्वादन्तःकरणादेरहमाकारानुभवविषयत्वं शरीरेंद्रियादेरुभयविधानुभवसंस्कारसहिताऽविद्याकार्यत्वा
दुभयविधानुभवविषयत्वं तथाचोभयविधोनुभवः इदंशरीरमहंदेहः अहंमनुष्यः अहंब्राह्मणः इदंचक्षुरहंकाणः
इदंश्रोत्रं अहंबधिरइति एवंतेच प्रातिभासिकरजतस्यभ्रमात्पूर्वंचैतन्याभिन्नेदमंशावच्छिन्नचैतन्यनिष्ठाविद्याका
र्यत्वेपि इदंरजतमिति सत्यस्थलेपीदमंशाकारानुभवाहितसंस्कारसहकृताविद्याजन्यत्वादिदमाकारानुभववि
षयता नत्वहंरजतमित्यहमाकारानुभवविषयतेत्यनुसंधेयं नन्वेवमपिमिथ्यारजत स्यसाक्षात्साक्षिसंबंधितया
भानसंभवेरजतगोचरज्ञानाभासरूपायाअविद्यावृत्तेरभ्युपगमः किमर्थमितिचेत् उच्यते स्वगोचरवृत्त्युपहितचैत
न्याभिन्नसत्ताकत्वाभावस्यविषयापरोक्षरूपतयारजतस्यापरोक्षत्वसिद्ध्येतदभ्युपगमात् ननु इदंवृत्तेः रजताकारवृ
त्तेश्च प्रत्येकमेकैकविषयत्वे गुरुमतवद्विशिष्टज्ञानानभ्युपगमे कुतोभ्रमज्ञानसिद्धिरितिचेन्न वृत्तिद्वयप्रतिबिंबि
तचैतन्यस्यैकस्यसत्यमिथ्यावस्तुतादात्म्यावगाहित्वेनभ्रमस्यस्वीकारात् अतएवसाक्षिज्ञानस्यसत्यासत्यविषयत
याप्रामाण्यानियमात् अप्रमाण्योक्तिः सांप्रदायिकानां ननु सिद्धांते देशांतरीयरजतमप्यविद्याकार्यमध्यस्तं चेति
कथंशुक्तिरूप्यस्यततोवैलक्षण्यमितिचेन्न त्वन्मतेसत्त्वाविशेषेपि केषांचित्क्षणिकत्वं केषांचित्स्थायित्वं दु
सत्रयदेवनियामकंतदेवस्वभावविशेषादिकंममापि यद्वाघटाद्यध्यासेअविद्यैवदोषत्वेनापिहेतुः शुक्तिरूप्या

वे० ध्यासिकाचारयोर्दोषाः तथाचागंतुकदोषजन्यत्वं प्रातिभासिकत्वे प्रयोजकं अतएव स्वप्नोपलब्धरथादीनामागंतुकनिद्रा
प० दिदोषजन्यत्वात्प्रातिभासिकत्वं ननु स्वप्नस्थले पूर्वानुभूतरथादेः स्मरणमात्रेणैव व्यवहारोपपत्तौ न रथादिसृष्टिकल्पनं
७ गौरवादिति चेन्न रथादेः स्मरणमात्राभ्युपगमे रथं पश्यामि स्वप्ने रथमद्राक्षमित्याद्यनुभवविरोधापत्तेः अथ रथान् रथ
योगान् पथः सृजते इति रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेश्च तस्माच्छुक्तिरूप्यवत् स्वप्नोपलब्धरथादयो
पि प्रातिभासिका यावत्प्रतिभासमुपतिष्ठंते ननु स्वप्नस्थाद्यधिष्ठानतयोपलभ्यमानदेशविशेषस्यापि तदासन्निकृष्टत
याऽनिर्वचनीयप्रातिभासिकदेशोऽभ्युपगंतव्यस्तथा च रथाद्यध्यासः कुत्रेति चेन्न चैतन्यस्य स्वयंप्रकाशस्य रथाद्यधि
ष्ठानत्वात्प्रतीयमानरथाद्यस्तीत्येवं प्रतीयते इति सद्रूपेण प्रकाशमानचैतन्यमेवाधिष्ठानं देशविशेषोपि चिदध्यस्तः प्रा
तिभासिकः रथादाविंद्रियग्राह्यत्वमपि प्रातिभासिकं तदा सर्वेन्द्रियाणामुपरमात् अहंगजद्रसादिप्रतीत्यापादानं तु पूर्व
वन्निरसनीयम् स्वप्नगजादयः साक्षान्मायापरिणामा इति केचित् अंतःकरणद्वारा तत्परिणामा इत्यन्ये ननु गजादेः। सं०
शुद्धचैतन्याध्यस्तत्वे इदानीं अधिष्ठानसाक्षात्काराभावेन जागरणेपि स्वप्नोपलब्धगजादयोऽनुवर्तेरन् उच्यते कार्यवि ७
नाशो हि द्विविधः कश्चिदुपादानेन सह कश्चित् विद्यमान एवोपादाने आद्यो बाधः द्वितीयस्तु निवृत्तिः आद्यस्य कारणं त
त्त्वसाक्षात्कारः तेन विनोपादानभूताया अविद्याया अनिवृत्तेः द्वितीये विरोधिवस्तूत्पत्तिर्दोषनिवृत्तिश्च तदिह ब्रह्मसा

साक्षात्काराभावात् स्वप्नप्रपंचो माबाधि ष्ट मुशलप्रहारेण घटादेरिव विरोधिप्रत्ययांतरोदयेन स्वजनकीभूतनिद्रादिदोष
नाशेन वा गजादिनिवृत्तौ को विरोधः एवं च शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यनिष्ठतूलाविद्याकार्यत्वपक्षे शुक्तिरितिज्ञा
नेन तदज्ञानेन सह रजतस्य बाधः मूलाविद्याकार्यत्वपक्षे तु मूलाविद्याया ब्रह्मसाक्षात्कारमात्रनिवर्त्यतया शुक्तित्व
ज्ञानेनानिवर्त्यतया रजतस्य तत्र शुक्तिज्ञानान्निवृत्तिमात्रं मुसलप्रहारेण घटस्येव ननु शुक्तौ रजतस्य प्रतिभाससमये
प्रातिभासिकसत्त्वाभ्युपगमेनेदं रजतमिति त्रैकालिकनिषेधज्ञानं न स्यात् किं त्विदानीमिदं न रजतमिति इदानीं घटः ।
श्यामो नेतिवदिति चेन्न नहि तत्र रजतत्वावच्छिन्नप्रतियोगिताकाभावो निषेधधीविषयः किंतु लौकिकपारमार्थिकत्वा
वच्छिन्नप्रातिभासिकरजतप्रतियोगिकः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमात् ननु प्रातिभासिके
रजते पारमार्थिकत्वमवगतं न वा अनवगमे प्रतियोगितावच्छेदकावच्छिन्नरजतसत्त्वज्ञानाभावादभावप्रत्ययस्यानुप
पत्तिः अवगमे ऽपरोक्षावभासस्य तत्कालीनविषयसत्तानियतत्वात् रजते पारमार्थिकत्वमप्यनिर्वचनीयं रजतवदेवो
त्पन्नमिति तदवच्छिन्नरजतसत्त्वे तदवच्छिन्नाभावस्तस्मिन् कथं वर्तते इति चेन्न पारमार्थिकत्वस्याधिष्ठाननिष्ठस्य रज
ते प्रतिभाससंभवेन रजतनिष्ठपारमार्थिकत्वोत्पत्त्यनभ्युपगमात् यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकं वस्तूत्प
त्तेरंगीकारात् अत एवेंद्रियसन्निकृष्टतया जपाकुसुमलौहित्यस्य स्फटिके भानसंभवात् न स्फटिके अनिर्वचनीय

वे० लौहित्योत्पत्तिः नन्वेवं यत्र जपाकुसुमं द्रव्यांतरव्यवधानादसन्निकृष्टं तत्र लौहित्यप्रतीत्या प्रातिभासिकं लौहित्यं स्वीक्रियत इ
प० तिचेन्न इष्टत्वात् एवं प्रत्यक्षभ्रमांतरेष्वपि प्रत्यक्षसामान्यलक्षणानुगमो यथार्थप्रत्यक्षलक्षणासद्भावश्च दर्शनीयः।
८ उक्तं प्रत्यक्षं प्रकारांतरेण द्विविधं इंद्रियजन्यं तदजन्यं चेति तत्रेंद्रियाजन्यं सुखादिप्रत्यक्षं मनस इंद्रियत्वनिराक
रणात् इंद्रियाणि पंच घ्राणरसनचक्षुःश्रोत्रत्वगात्मकानि सर्वाणि च इंद्रियाणि स्वस्वविषयसंयुक्तान्येव प्रत्यक्षज्ञानं
जनयंति तत्र घ्राणरसनत्वगिंद्रियाणि स्वस्थानस्थितान्येव गंधरसस्पर्शोपलंभान् जनयंति चक्षुःश्रोत्रे तु स्वत एव वि
षयदेशं गत्वा स्वस्वविषयं गृण्हीतः श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भेर्यादिदेशगमनसंभवात् अत एवानुभ
वो भेरीशब्दो मया श्रुत इति वीचीतरंगादिन्यायेन कर्णशष्कुलीप्रदेशे अनंतशब्दोत्पत्तिकल्पनागौरवं भेरीशब्दो म
या श्रुत इति प्रत्यक्षस्य भ्रमत्वकल्पनागौरवं च स्यात् तदेवं व्याख्यातं प्रत्यक्षम्॥ इति प्रत्यक्षपरिच्छेदः प्रथमः १॥
अथानुमानं निरूप्यते अनुमितिकरणमनुमानं अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या व्याप्तिज्ञानानुध्वंसाया ए०
देस्तत्वेन तज्जन्यत्वाभावात् अनुमितित्वं अनुमितिकरणं च व्याप्तिज्ञानं तत्संस्कारोऽवांतरव्यापारः न तु तृतीयलिंगपरामर्शो ८
नुमितौ करणं तस्य अनुमितिहेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वात् न च संस्कारजन्यत्वेनानुमितेः स्मृतित्वापत्तिः॥
स्मृतिप्रागभावजन्यत्वस्य संस्कारमात्रजन्यत्वस्य वा स्मृतित्वे प्रयोजकतया संस्कारध्वंससाधारणसंस्कारजन्यत्वस्य तद्

प्रयो[illegible]त्वात् न च व्याप्तिस्मरणादनुमितिस्तत्र कथं संस्कारो हेतुरिति वाच्यं व्याप्तिस्मृतिस्थलेऽपि तत्संस्कारस्यैवानुमितिहेतुत्वात् न हि स्मृतेः संस्कारनाशकत्वनियमः स्मृतिधारादर्शनात् न चोद्बुद्धसंस्कारादप्यनुमित्यापत्तिः तदुद्बोधकस्यापि सहकारित्वात् एवं चायं धूमवानिति पक्षधर्मताज्ञानेन धूमो वह्निव्याप्य इत्यनुभवाहिततत्संस्कारोद्बोधे च सति वह्निमानित्यनुमितिर्भवति न तु मध्ये व्याप्तिस्मरणं तज्जन्यं वह्निव्याप्यधूमवानित्यादिविशेषणविशिष्टज्ञानं वा हेतुत्वेन कल्पनीयं गौरवात् मानाभावाच्च तच्च व्याप्तिज्ञानं वह्निविषयकज्ञानांश एव करणं न तु पर्वतविषयकज्ञानांशे इति पर्वतो वह्निमानिति ज्ञानस्य वह्न्यंश एवानुमितित्वं न पर्वतांशे तदंशे प्रत्यक्षत्वस्योपपादितत्वात् व्याप्तिश्चाशेषसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यरूपा सा च व्यभिचारादर्शने सति सहचारदर्शनेन गृह्यते तच्च सहचारदर्शनं भूयोदर्शनं सकृद्दर्शनं वेति विशेषो नादरणीयः सहचारदर्शनस्यैव प्रयोजकत्वात् तच्चानुमानमन्वयिरूपमेकमेव न तु केवलान्वयि सर्वस्यापि धर्मस्यास्मन्मते ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेनात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपकेवलान्वयित्वस्यासिद्धेः नाप्यनुमानस्य व्यतिरेकिरूपत्वं साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयोगात् कथं तर्हि धूमाद्यन्वयव्याप्तिमविदुषोऽपि व्यतिरेकव्याप्तिज्ञानादनुमितिः अर्थापत्तिप्रमाणादिति वक्ष्यामः अत एवानुमानस्य नान्वयव्यतिरेकिरूपत्वं व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वात् तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम्॥

अवयव रूपः

वे० तत्र स्वार्थं तूक्तमेव परार्थं तु न्यायसाध्यं न्यायो नामावयवसमुदायः अवयवाश्च प्रतिज्ञाहेतूदाहरणरूपाः उदाहरणो
प० पनयनिगमनरूपा वा न तु पंच अवयवा येणैव व्याप्तिपक्षधर्मतयोरुपदर्शनसंभवे नाधिकावयवद्वयस्य व्यर्थत्वात् एव
६ मनुमाने निरूपिते तस्माद्ब्रह्मभिन्ननिखिलप्रपंचस्य मिथ्यात्वसिद्धिः तथाहि ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वाद्यदेवं तदे
वं यथा शुक्तिरूप्यं न च दृष्टांतासिद्धिः तस्य साधितत्वात् न चाप्रयोजकं शुक्तिरूप्यरज्जुसर्पादीनां मिथ्यात्वे ब्रह्मभिन्न
त्वस्यैव लाघवेन प्रयोजकत्वात् मिथ्यात्वं च स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यंताभावप्रतियोगित्वं अभिमतपदमसंभव
वारणाय यावत्पदमर्थांतरवारणाय तदुक्तं सर्वेषामपि भावानां स्वाश्रयत्वेन संमते प्रतियोगित्वमत्यंताभावं प्रति मृषात्म
तेति यद्वा अयं पट एतत्तंतुनिष्ठात्यंताभावप्रतियोगी पटत्वात् पटांतरवदित्यनुमानं मिथ्यात्वे प्रमाणं तदुक्तं अंशिनः
स्वांशगात्यंताभावस्य प्रतियोगिता अंशित्वादितरांशीव दिगेषैव गुणादिष्विति न च घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्ष
बाधः अधिष्ठानसत्तायास्तत्र विषयतया घटादेः सत्त्वस्यासिद्धेः न च नीरूपस्य ब्रह्मणः कथं चाक्षुषादिज्ञानविषयतेति सं०
वाच्यं नीरूपस्यापि रूपादेः प्रत्यक्षविषयत्वात् न च नीरूपस्य द्रव्यस्य चक्षुराद्ययोग्यत्वनियमः मन्मते ब्रह्मणो द्रव्यत्वासि ६
द्धेः गुणाश्रयत्वं समवायिकारणत्वं वा द्रव्यत्वमिति तेऽभिमतं नहि निर्गुणस्य ब्रह्मणो गुणाश्रयता नापि समवायिकारणता
समवायासिद्धेः अस्तु वा द्रव्यत्वं ब्रह्मणः तथापि नीरूपस्य कालस्येव चाक्षुषादिज्ञानविषयत्वेपि न विरोधः यद्वा निविधं

सत्त्वं पारमार्थिकं व्यावहारिकं प्रातिभासिकं च पारमार्थिकं सत्त्वं ब्रह्मणः व्यावहारिकं सत्त्वं आकाशादेः प्रातिभासिकं सत्त्वं शु-
क्तिरजतादेः तथा च घटः सन् इति प्रत्यक्षस्य व्यावहारिकसत्त्वविषयत्वेन प्रामाण्यं अस्मिन्पक्षे च घटादेः ब्रह्मणि निषेधो
न स्वरूपेण किंतु पारमार्थिकत्वेनैवेति न विरोधः अस्मिन्पक्षे च मिथ्यात्वलक्षणे पारमार्थिकत्वावच्छिन्नप्रतियोगिक-
त्वमसत्ताभावे विशेषणं द्रष्टव्यं तस्मादुपपन्नं मिथ्यात्वानुमानमिति इत्यनुमानं अथोपमानं निरूप्यते तत्र सादृश्यप्रमा
करणमुपमानं तथा हि नगरेषु दृष्टगोपिंडस्य पुरुषस्य वनं गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिरयं पिंडो गोसदृ-
श इति तदनंतरं भवति निश्चयः अनेन सदृशी मदीया गौरिति तत्रान्वयव्यतिरेकाभ्यां गवयनिष्ठगोसादृश्यज्ञानं करणं ॥
गोनिष्ठगवयसादृश्यज्ञानं फलं न चेदं प्रत्यक्षेण संभवति गोपिंडस्य तदेन्द्रियासन्निकर्षात् नाप्यनुमानेन गवयनिष्ठगोसा-
दृश्यस्यातल्लिंगत्वात् नापि मदीया गौरेतद्गवयसदृशी एतन्निष्ठसादृश्यप्रतियोगित्वात् यो यद्गतसादृश्यप्रतियोगी स तत्स-
दृशः यथा मैत्रनिष्ठसादृश्यप्रतियोगी चैत्रः मैत्रसदृश इत्यनुमानात्तत्संभव इति वाच्यं एवंविधानुमानानवतारेप्यनेन सदृ-
शी मदीया गौरिति प्रतीतेः अनुभवसिद्धत्वादुपमिनोमीत्यनुव्यवसायाच्च तस्मादुपमानं मानांतरं इत्युपमानं ॥ अथागमो
निरूप्यते यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानांतरेण न बाध्यते तद्वाक्यं प्रमाणं वाक्यजन्ये च ज्ञाने आकांक्षायो-
ग्यतासत्तयस्तात्पर्यज्ञानं चेति चत्वारि कारणानि तत्र पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकांक्षा क्रियाश्र

वे० वणे कारकस्य कारकश्रवणे क्रियायाः करणश्रवणे इति कर्तव्यतायाश्च जिज्ञासाविषयत्वात् अजिज्ञासोरपि वाक्यार्थबो
प० धाद्योग्यत्वमुपात्तं तदवच्छेदकं च क्रियात्वकारकत्वमिति नाव्याप्तिर्गौरश्वइत्यादौ अभेदान्वये च समानविभक्तिकपद
१० प्रतिपाद्यत्वं तदवच्छेदकमिति तत्त्वमस्यादिवाक्येषु नाव्याप्तिः एतादृशाकांक्षाभिप्रायेणैव बलाबलाधिकरणे सा वैश्व
देव्यामिक्षा वाजिभ्यो वाजिनमित्यत्र वैश्वदेवयागस्याऽऽमिक्षान्वितत्वेन न वाजिनाकांक्षेत्यादिव्यवहारः ननु तत्रापि वा
जिनस्य जिज्ञासाऽविषयत्वेपि तद्योग्यत्वमस्त्येव प्रदेयद्रव्यत्वस्य यागनिरूपितजिज्ञासाविषयतावच्छेदकत्वादिति चेन्न
स्वसमानजातीयपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वस्यैव तदवच्छेदकत्वे न वाजिनद्रव्यस्य स्वसमानजातीया
मिक्षाद्रव्यान्वयबोधसहकृतत्वेन तादृशावच्छेदकाभावात् आमिक्षायां तु नैवं वाजिनान्वयस्य तदानुपस्थानात् उदाहर
णान्तरेष्वपि दुर्बलत्वे प्रयोजक आकांक्षाविरह एव द्रष्टव्यः योग्यता च तात्पर्यविषयीभूतसंसर्गाबाधः वह्निना सिंचतीत्या
दौ तादृशसंसर्गबाधान्न योग्यता सप्रजापतिरात्मनो वपामुदखिददित्यादावपि तात्पर्यविषयीभूतपशुप्राशस्त्याबाधा ए०
द्योग्यता तत्त्वमस्यादिवाक्येष्वपि वाच्याभेदबाधेपि लक्ष्यस्वरूपाभेदबाधाभावाद्योग्यता आसत्तिश्च अव्यवधानेन पद १०
जन्यपदार्थोपस्थितिः मानान्तरोपस्थापितपदार्थस्यान्वयबोधाभावात् पदजन्येति अत एवाश्रुतस्थले तत्तत्पदाध्याहा
रः द्वारमित्यादौ पिधेहीति अत एव इषेत्वोर्जेत्यादिमंत्रे छिनत्तीति पदाध्याहारः अत एव विकृतिषु सूर्याय जुष्टं निर्वपा

मीतिपदप्रयोगः पदार्थश्च द्विविधः शक्यो लक्ष्यश्चेति तत्र शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिः यथा घटपदस्य पृथु
बुध्नोदराकृतिविशिष्टवस्तुविशेषे वृत्तिः सा च शक्तिः पदार्थान्तरं सिद्धान्ते तु कारणेषु कार्यानुकूलशक्तिमात्रस्य पदार्थान्तरत्वा
त् सा च तत्तत्पदजन्यपदार्थज्ञानरूपकार्यानुमेया तादृशशक्तिविषयत्वं शक्यत्वं तच्च जातेरेव न व्यक्तेः व्यक्तीनामानन्त्येन गुरु
त्वात् कथं तर्हि गवादिपदाद्व्यक्तिभानमिति चेन्न जातेर्व्यक्तिसमानसंवित्संवेद्यत्वादिति ब्रूमः यद्वा गवादिपदानां व्यक्तौ
शक्तिः स्वरूपसती न तु ज्ञाता जातौ तु सा ज्ञाता हेतुः न च व्यक्त्यंशे शक्तिभानमपि कारणं गौरवात् जातिशक्तिमत्त्वज्ञाने सति व्यक्ति
शक्तिमत्त्वज्ञानं विना व्यक्तिधीविलंबाभावाच्च अत एव न्यायमतेऽपि अन्वये शक्तिः स्वरूपसतीति सिद्धान्तः ज्ञायमानशक्ति
विषयत्वमेव वाच्यत्वमिति जातिरेव वाच्या अथवा व्यक्तेर्लक्षणयावगमः यथा नीलो घट इत्यत्र नीलशब्दस्य नीलगुणवि
शिष्टलक्षणा तथा जातिवाचकस्य तद्विशिष्टे लक्षणा तदुक्तं अनन्यलभ्यो हि शब्दार्थ इति एवं शक्यो निरूपितः अथ ल
क्ष्यपदार्थो निरूप्यते तत्र लक्षणाविषयो लक्ष्यः लक्षणा च द्विविधा केवललक्षणा लक्षितलक्षणा चेति तत्र शक्यसाक्षा
त्संबंधः केवललक्षणा यथा गंगायां घोष इत्यत्र प्रवाहसाक्षात्संबंधिनि तीरे गंगापदस्य केवललक्षणा यत्र शक्यपरं
परासंबंधेनार्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा यथा द्विरेफपदस्य रेफद्वययुक्तभ्रमरपदघटितपरंपरासंबंधेन मधुकरे
वृत्तिः गौण्यपि लक्षितलक्षणैव यथा सिंहो माणवक इत्यत्र सिंहशब्दवाच्यसंबंधिक्रौर्यादिसंबंधेन माणवकस्य प्रती

वे॰ ते: प्रकारांतरेण लक्षणा त्रिविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणाचेति तत्र शक्यमनंतर्भाव्य यत्रार्थांतरस्य
प॰ प्रतीतिस्तत्र जहल्लक्षणा यथा विषंभुंक्ष्वेत्यत्र स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिर्लक्ष्यते यत्र शक्यार्थमंतर्भाव्यैवार्थांतर
११ प्रतीतिस्तत्राजहल्लक्षणा यथा शुक्लो घट इत्यत्र हि शुक्लशब्दः स्वार्थं शुक्लगुणमंतर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्त्तते॰
यत्र हि विशिष्टवाचकः शब्द एकदेशं विहाय एकदेशे वर्त्तते तत्र जहदजहल्लक्षणा यथा सोयं देवदत्त इति, अत्र हि पद
द्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वं यथा वा तत्त्वमसीत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वा
दिविशिष्टस्य त्वंपदवाच्येनांतःकरणविशिष्टेनैक्यायोगादैक्यसिद्ध्यर्थं स्वरूपे लक्षणेति सांप्रदायिकाः वयं तु ब्रूमः।
सोयं देवदत्तस्तत्त्वमसीत्यादौ विशिष्टवाचकपदानामेकदेशपरत्वेपि न लक्षणा शक्त्युपस्थितविशिष्टयोरभेदान्वयानु
पपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवाभेदान्वयाविरोधात् यथा घटोनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायो
ग्यत्वेपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः यत्र पदार्थैकदेशस्य विशेषणतयोपस्थितिः तत्रैव स्वातंत्र्येणोपस्थितये ग॰
लक्षणाभ्युपगमः यथा नित्यो घट इत्यत्र घटपदात् घटत्वस्य शक्त्या स्वातंत्र्येणानुपस्थितस्तादृशोपस्थित्यर्थं घटपदस्य घटत्वे ल ११
क्षणा एवमेव तत्त्वमसीत्यादिवाक्येपि न लक्षणा शक्त्या स्वातंत्र्येणोपस्थितयोस्तत्त्वंपदार्थयोरभेदान्वये बाधकाभा
वात् अन्यथा गेहे घटः घटे रूपं घटमानयेत्यादौ घटत्वगेहत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदा

नां विशेष्यमात्रपरत्वे लक्षणैव स्यात् तस्मात् तत्त्वमसीत्यादिवाक्येषु आचार्याणां लक्षणोक्तिरभ्युपगमवादेन बोध्या जहद
जहल्लक्षणोदाहरणं तु काकेभ्यो दधि रक्ष्यतामित्यादिकमेव तत्र शक्य काकत्वपरित्यागेनाशक्य दध्युपघातकत्वपुरस्का
रेण काके अकाकेपि शब्दस्य प्रवृत्तेः लक्षणाबीजं तु तात्पर्यानुपपत्तिरेव न त्वन्वयानुपपत्तिः काकेभ्यो दधि रक्ष्यतामित्य
त्रान्वयानुपपत्तेरभावात् गंगायां घोष इत्यादौ तात्पर्यानुपपत्तेरपि संभवात् लक्षणा च न पदमात्रवृत्तिः किं तु वाक्यवृत्तिर
पि यथा गंभीरायां नद्यां घोष इत्यत्र गंभीरायां नद्यामिति पदद्वयसमुदायस्य तीरे लक्षणा ननु वाक्यस्याशक्यतया कथं
शक्यसंबंधरूपा लक्षणा उच्यते शक्त्या यत्पदेन ज्ञाप्यते तत्संबंधो लक्षणा शक्तिज्ञाप्यश्च यथा पदार्थः तथा वाक्या
र्थोपीति न काचिदनुपपत्तिः एवमर्थवादवाक्यानां प्रशंसारूपाणां प्राशस्त्ये लक्षणा सोरोदीदित्यादि निंदार्थवाक्यानां
निंदितत्वे लक्षणा अर्थवादगतपदानां प्राशस्त्यादिलक्षणाभ्युपगमे एकेन पदेन लक्षणया तदुपस्थितिसंभवे पदांतरवै
यर्थ्यं स्यात् एवं च विध्यपेक्षितप्राशस्त्यरूपपदार्थप्रत्यायकतयाऽर्थवादसमुदायस्य पदस्थानीयतया विधिबोधित
पदेनैकवाक्यत्वं भवतीत्यर्थवादपदानां पदैकवाक्यता क्व तर्हि वाक्यैकवाक्यता तत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रति
पादकयोरुभयोर्वाक्ययोराकांक्षावशेन महावाक्यार्थबोधकत्वं यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिवा
क्यानां समिधो यजतीत्यादिवाक्यानां च परस्परापेक्षितांगांगिभावबोधकवाक्यतयैवैकवाक्यता तदुक्तं भट्टपादैः

वे० स्वार्थबोधे समाप्तानामंगांगित्वाद्यपेक्षया वाक्यानामेकवाक्यत्वं पुनः संहत्य जायत इति एवं द्विविधोपि पदार्थो निरूपितः ४
प० तदुपस्थितिश्चासत्तिः सा च शाब्दबोधे हेतुः तथैवान्वयव्यतिरेकदर्शनात् एवं महावाक्यार्थबोधेऽवांतरवाक्यार्थबोधो हे
१२ तुः तथैवान्वयाद्यवधारणात् क्रमप्राप्तं तात्पर्यं निरूप्यते तत्र तत्प्रतीतीच्छयोच्चरितत्वं न तात्पर्यं अर्थज्ञानशून्येनोच्च
रिताद्वेदादर्थप्रत्ययाभावप्रसंगात् अयमध्यापकोऽव्युत्पन्न इति विशेषदर्शनेन तत्र तात्पर्यभ्रमस्याप्यभावात् न चेश्वरी
यतात्पर्यज्ञानात्तत्र शाब्दबोध इति वाच्यम् ईश्वरानंगीकर्तुरपि तद्वाक्यादर्थप्रतिपत्तिदर्शनात् उच्यते तत्प्रतीतिजनन
योग्यत्वं तात्पर्यं गेहे घट इति वाक्यं गेहघटसंसर्गप्रतीतिजननयोग्यं न तु पटसंसर्गप्रतीतिजननयोग्यमिति तद्वाक्यं
घटसंसर्गपरं न तु पटसंसर्गपरमित्युच्यते ननु सैंधवमानये त्यादिवाक्यं यदा लवणानयनप्रतीतीच्छया प्रयुक्तं तदा
प्यश्वसंसर्गप्रतीतिजनने स्वरूपयोग्यतासत्वाल्लवणपरत्वज्ञानदशायामपि अश्वादिसंसर्गज्ञानापत्तिरिति चेन्न तदि
तरप्रतीतीच्छयानुच्चरितत्वस्यापि तात्पर्ये लवणे विशेषणत्वात् तथा च यद्वाक्यं यत्प्रतीतिजननयोग्यत्वे सति यदन्यप्र वे०
तीतीच्छयानोच्चरितं तद्वाक्यं तत्संसर्गपरमित्युच्यते शुकादिवाक्येऽव्युत्पन्नोच्चरितवेदवाक्यादौ च तत्प्रतीतीच्छाया १२
एवाभावेन तदन्यप्रतीतीच्छयोच्चरितत्वाभावेन लक्षणसत्वान्नाव्याप्तिः न चोभयप्रतीतीच्छयोच्चरितेऽव्याप्तिः तदन्यमात्र
प्रतीतीच्छयानुच्चरितत्वस्य विवक्षितत्वात् उक्तप्रतीतिजननयोग्यतायाश्चावच्छेदिका शक्तिः अस्माकं मते सर्वत्र कारणता

स्वरूप

यांशक्तेरेवावच्छेदकत्वादितिनकोपिदोषः एवंतात्पर्यस्यतत्प्रतीतिजनकत्वरूपस्यशाब्द ज्ञानजनकत्वेन चतुर्थवर्णके
तात्पर्यस्यशाब्दज्ञानहेतुत्वनिराकरणवाक्यं तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यस्यनिराकरणंपरं अन्यथातात्पर्यनिश्चयफ
लकवेदांतविचारवैयर्थ्यप्रसंगात केचितुशाब्दज्ञानत्वावच्छेदेन तन्नतात्पर्यज्ञानंनहेतुरित्येवपरंचतुर्थवर्णकेवाक्यंतात्प
र्यसंशयविपर्ययोत्तरशाब्दज्ञानविशेषेच तात्पर्यज्ञानंहेतुरेव इदंवाक्यमेतत्परमुतान्यपरमितिसंशयेतद्विपर्ययएवतदु
त्तरवाक्यार्थविशेषनिश्चयस्यतात्पर्यनिश्चयंविना अनुपपत्तेरित्याहुः तच्चतात्पर्यंवेदेमीमांसापरिशोधितन्यायादेवाव
धार्यते लोकेतुप्रकरणादिना तत्रलौकिकवाक्यानांमानांतरावगतार्थानुवादकत्वं वेदेतुवाक्यार्थस्यापूर्वतयानानुवादक
त्वं तत्रलोकेवेदेचकार्यपराणामिवसिद्धार्थानामपिप्रामाण्यं पुत्रस्तेजातइत्यादिषुसिद्धपदार्थेपिपदानांसामर्थ्यावधार
णात् अतएववेदांतवाक्यानामद्वैतेब्रह्मणिप्रामाण्यं यथाचैतत्तथाविषयपरिच्छेदेवक्ष्यते तत्रवेदानांनित्यसर्वज्ञपरमे
श्वरप्रणीतत्वेनप्रामाण्यमितिनैयायिकाः वेदानांनित्यत्वेननिरस्तसमस्तपुंदूषणतयाप्रामाण्यमित्यध्वरमीमांसकाः अ
स्माकंतुमते वेदोननित्यउत्पत्तिमत्त्वात् उत्पत्तिमत्त्वंचास्यमहतोभूतस्यनिश्वसितमेतद्यदृग्वेदोयजुर्वेदः सामवेदइति
श्रुतेः नापिवेदानांक्षणिकत्वं यएववेदोदेवदत्तेनाधीतः सएवमयाप्यधीतइत्यादिप्रत्यभिज्ञाविरोधात् अतएवगका
रादिवर्णानामपिनक्षणिकत्वं सोयंगकारइतिप्रत्यभिज्ञाविरोधात् तथाच वर्णपदवाक्यसमुदायरूपस्यवेदस्यवि

वे॰ यद्वाद्वित्वस्रुष्टिकालीनोत्पत्तिकत्वंप्रलयकालीनध्वंसप्रतियोगित्वंच नतुमध्ये वर्णानामुत्पत्तिविनाशावनंतगकारकल्पना
प॰ यांगौरवात् अनुच्चारणदशायांवर्णानामनभिव्यक्तिस्तदुच्चारणरूपव्यंजकाभावान्नविरुध्यते अंधकारस्थघटानुपलंभव
१३ त् उत्पन्नोगकारइत्यादिप्रत्ययःसोयंगकारइतिप्रत्यभिज्ञाविरोधादप्रमाणं वर्णाभिव्यक्तिजनकध्वनिगतोत्पत्तिनिरूपि
तपरंपरासंबंधविषयत्वेनप्रमाणं वा तस्मान्नवेदानांक्षणिकत्वं ननुक्षणिकत्वाभावेपिवियदादिप्रपंचवदुत्पत्तिमत्त्वेनपर
मेश्वरकर्तृतयापौरुषेयत्वात् अपौरुषेयत्वंचवेदानामितिलवसिद्धांतोभज्येतेतिचेन्न नहिपुरुषेणोच्चार्यमाणत्वंपौरु
षेयत्वंगुरुमतेप्यध्यापकपरंपरयापौरुषेयत्वापत्तेः नापिपुरुषाधीनोत्पत्तिमत्त्वंपौरुषेयत्वं नैयायिकाभिमतेपौरुषेयत्वा
नुमानेऽस्मदादीनांसिद्धसाधनापत्तेः किंतुसजातीयोच्चारणानपेक्ष्योच्चारणविषयत्वंपौरुषेयत्वं भारतादीनांतुसजातीयो
च्चारणमनपेक्ष्यैवोच्चारणमितितेषांपौरुषेयत्वं तथाचसर्गादिकालेपरमेश्वरःपूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकंवे
दंविरचितवान् नतुतद्विजातीयंवेदमिति नसजातीयोच्चारणानपेक्ष्योच्चारणविषयत्वंपौरुषेयत्वं भारतादीनांतुसजातीयोच्चा रा॰
रणमनपेक्ष्यैवोच्चारणमितितेषांपौरुषत्वं एवंपौरुषेयापौरुषेयभेदेनागमोद्विधानिरूपितः इत्यादिगमः ॥इदानीम १३
र्थापत्तिर्निरूप्यते तत्रोपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः तत्रोपपाद्यज्ञानंकरणंउपपादकज्ञानंफलं येनविनायद
नुपपन्नंततत्रोपपाद्यं यस्याभावेयस्यानुपपत्तिस्तत्तत्रोपपादकं यथारात्रिभोजनेनविनादिवाऽभुंजानस्यपीनत्वमनुप

पन्नं इति तादृशपीनत्वमुपपाद्यं यथा वा रात्रिभोजनस्याभावे तादृशपीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकं रात्रिभो
जनकल्पनारूपायां प्रमितावर्थस्यापत्तिः कल्पनेति षष्ठीसमासेनार्थापत्तिशब्दो वर्तते कल्पनाकरणे पीनत्वादिज्ञाने त्व
र्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन वर्तते इति फलकरणयोरुभयोस्तत्सद्प्रयोगः साचार्थापत्तिर्द्विविधा
दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति तत्र दृष्टार्थापत्तिर्यथा इदं रजतमिति पुरोवर्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमि
ति तत्रैव निषिध्यमानत्वं सत्यत्वेऽनुपपन्नमिति रजतस्य सद्भिन्नत्वं सत्त्वासत्त्वाभाववत्त्वं वा मिथ्यात्वं कल्पयति श्रुता
र्थापत्तिर्यथा यत्र श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थांतरकल्पनम् यथा तरति शोकमात्मविदित्यत्र श्रुतस्य शो
कशब्दवाच्यबंधजातस्य ज्ञाननिवर्त्यस्यानुपपत्त्या बंधस्य मिथ्यात्वं कल्प्यते यथा वा जीवी देवदत्तो गृहे नेति वाक्यश्रवणा
नंतरं जीविनो गृहासत्त्वं बहिः सत्त्वं कल्पयति श्रुतार्थापत्तिश्च द्विविधा अभिधानानुपपत्तिरभिहितानुपपत्तिश्च तत्र यत्र
वाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्याऽन्वयाभिधानोपयोगिपदांतरं कल्प्यते तत्राभिधानानुपपत्तिः तद्यथा
द्वारमित्यत्र पिधेहीत्यध्याहारः यथा वा विश्वजिता यजेतेत्यत्र स्वर्गकामपदाध्याहारः ननु द्वारमित्यादावन्वयाभिधाना
त्पूर्वमिदमन्वयाभिधानं पिधानोपस्थापकपदं विनानुपपन्नमिति कथं ज्ञातमिति चेन्न अभिधानपदेन करणव्युत्पत्त्या ता
त्पर्यस्य विवक्षितत्वात् तथा च द्वारकर्मकपिधानक्रियासंसर्गपरत्वं पिधानोपस्थापकपदं विनाऽनुपपन्नमिति ज्ञानं

तत्रापिसंभाव्यते अभिहितानुपपत्तिस्तु यत्रवाक्यावगतोर्थोनुपपन्नत्वेन ज्ञातः सन्नर्थांतरंकल्पयति तत्रद्रष्टव्या य
थास्वर्गकामोज्योतिष्टोमेनयजेतेत्यत्र स्वर्गसाधनत्वस्य क्षणिकतयाऽवगतज्योतिष्टोमस्यानुपपत्त्यामध्यवर्त्यपूर्वंक
ल्प्यते नचेयमर्थापत्तिरनुमानेंतर्भवितुमर्हति अन्वयव्याप्त्यज्ञानेनान्वयिन्यनंतर्भावात् व्यतिरेकिणश्चानुमानत्वंप्रा
गेवनिरस्तं अतएवार्थापत्तिस्थले अनुमिनोमीति नानुव्यवसायः किंत्वनेनेदंकल्पयामीति ननु अर्थापत्तिस्थलेइदमनेन
विनानुपपन्नमितिज्ञानं करणमित्युक्तं तत्रकिमिदंतेनविनानुपपन्नत्वं तदभावव्यापकाभावप्रतियोगित्वमितिब्रूमः ।।
एवमर्थापत्तेर्मानांतरत्वसिद्धौ व्यतिरेकिनानुमानांतरं पृथिवीइतरेभ्योभिद्यते इत्यत्रगंधवत्त्वमितरभेदंविनानुपपन्न
मित्यादिज्ञानस्यकरणत्वात् अतएवानुव्यवसायः पृथिव्यामितरभेदंकल्पयामीति इत्यर्थापत्तिः इदानींषष्ठंप्रमाणं
निरूप्यते ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपंप्रमाणं अनुमानादिजन्यातीन्द्रियाभावानुभव
हेतावनुमानादावतिव्याप्तिवारणायाजन्यांतं अदृष्टादौसाधारणकारणेऽतिव्याप्तिवारणायासाधारणेति अभावस्मृत्य
साधारणहेतुसंस्कारेतिव्याप्तिवारणायानुभवेतिविशेषणं नचाभावानुमितिस्थलेप्यनुपलब्धेरेवाभावोगृह्यतां विशेषा १४
भावादितिवाच्यं धर्माधर्माद्यनुपलब्धिसत्त्वेपि तदभावानिश्चयेनयोग्यानुपलब्धेरेवाभावग्राहकत्वात् ननुकेयंयोग्यानु
पलब्धिः किंयोग्यस्यप्रतियोगिनोनुपलब्धिः उतयोग्याधिकरणेप्रतियोग्यनुपलब्धिः नाद्यः स्तंभेपिशाचादिभेदस्याप्रत्य

स्तापत्तेः नान्यः आत्मनि धर्माधर्माद्यभावस्यापि प्रत्यक्षतापत्तिरिति चेन्न योग्या चासावनुपलब्धिश्चेति कर्मधारयाश्रय
णात् अनुपलब्धेर्योग्यता च तर्कितप्रतियोगिसत्त्वप्रसंजितप्रतियोगिकत्वं यस्याभावो गृह्यते तस्य यः प्रतियोगी तस्य सत्त्वेना-
धिकरणे तर्कितेन प्रसंजनयोग्यमापादनयोग्यं यत्प्रतियोग्युपलब्धिस्वरूपं यस्यानुपलंभस्य तत्तदनुपलब्धेर्योग्यत्वमित्यर्थः
तथाहि स्फीतालोकवति भूतले यदि घटः स्यात्तदा घटोपलंभः स्यादित्यापादनसंभवात्तादृशभूतले घटाभावोऽनुपलब्धिग-
म्यः अंधकारे तु तादृशापाद नासंभवान्नानुपलब्धिगम्यता अतएव स्तंभे तादात्म्येन पिशाचसत्त्वे संभवत्प्रत्यक्षतापत्त्या तदभा
वोऽनुपलब्धिगम्यः आत्मनि धर्माधर्मादिसत्त्वेऽपि तस्यातींद्रियतया निरुक्तोपलंभापाद नासंभवान्न धर्माद्यभावस्यानुपल-
ब्धिगम्यत्वं ननूक्तरीत्याधिकरणेंद्रियसंनिकर्षस्थलेऽभावस्यानुपलब्धिगम्यत्वं तवानुमतं तत्र चक्षुरादींद्रियमेवाभावाका
रवृत्तावपि करणं इंद्रियान्वयव्यतिरेकानुविधानादिति चेन्न प्रतियोग्यनुपलब्धेरप्यभावग्रहहेतुत्वेन क्लृप्तत्वेन करण
त्वस्यावश्यकल्पनात् इंद्रियस्य चाभावेन समं संनिकर्षाभावेनाभावग्रहाहेतुत्वात् इंद्रियान्वयव्यतिरेकयोरधिकरण-
ज्ञानाद्युपक्षीणत्वेनान्यथासिद्धेः ननु भूतले घटो नेत्याद्यभावानुभवस्थले भूतलांशे प्रत्यक्षत्वमुभयसिद्धमिति तत्र वृत्ति
निर्गमनस्यावश्यकत्वेन भूतलावच्छिन्नचैतन्यवत्तन्निष्ठघटाभावावच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया घटाभावस्य
प्रत्यक्षतैव सिद्धांतेऽपीति चेत् सत्यं अभावप्रतीतेः प्रत्यक्षत्वेऽपि तत्करणस्यानुपलब्धेर्मानांतरत्वात् नहि फलीभूतज्ञान

वे० स्यप्रत्यक्षत्वे तत्करणस्य प्रत्यक्षप्रमाणतानियतत्वमस्ति दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेपि तत्करण
प० स्य वाक्यस्य प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युपगमात् फलवैजात्यं विना कथं प्रमाणभेद इति चेन्न वृत्तिवैजात्यमात्रेण
१५ प्रमाणवैजात्योपपत्तेः तथाच घटाभावाकारवृत्तिर्नेन्द्रियजन्या इन्द्रियस्य विषयेणासन्निकर्षात् किंतु घटाद्यनुपल
ब्धिरूपमानांतरजन्येति भवत्येवानुपलब्धेर्मानांतरत्वं नन्वनुपलब्धिरूपमानांतरपक्षेप्यभावप्रतीतेः प्रत्यक्षत्वे घ
टवति घटाभावभ्रमस्यापि प्रत्यक्षत्वापत्तौ तत्राप्यनिर्वचनीयघटाभावोभ्युपगम्येत नचेष्टापत्तिः तस्य मायोपादानका
त्वेऽभावत्वानुपपत्तेः मायोपादानकत्वाभावे मायायाः सकलकार्योपादानत्वानुपपत्तिरिति चेन्न घटवति घटाभावभ्र
मो न तत्कालोत्पन्नघटाभावविषयकः किंतु भूतलरूपादौ विद्यमानो लौकिको घटाभावो भूतले आरोप्यते इत्यन्य
थाख्यातिरेव आरोप्यसन्निकर्षस्थले सर्वत्रान्यथाख्यातेरेव व्यवस्थापनात् अस्तु वा प्रतियोगिमति तदभावभ्रमस्य
स्थले तदभावस्यानिर्वचनीयत्वं तथापि तदुपादानं मायैव न तूपादानोपादेययोः साजात्यं तंतुपटयोरपि तंतुत्वपट रा०
त्वादिना वैजात्यात् यत्किंचित्साजात्यस्य मायायां अनिर्वचनीयघटाद्यभावस्य च मिथ्यात्वधर्मस्य विद्यमानत्वात् ॥ १५
अन्यथा व्यावहारिकघटाद्यभावं प्रति कथं मायोपादानमिति कुतो न शंकेथाः नच विजातीययोरप्युपादानोपादेयभावे
ब्रह्मैव जगदुपादानं स्यादिति वाच्यं प्रपंचभ्रमाधिष्ठानत्वरूपस्य तस्येष्टत्वात् परिणामित्वरूपस्योपादानत्वस्य निरवय

विनाब्रह्मण्यनुपपत्तेः तथाच प्रपंचस्यपरिणाम्युपादानंमाया नब्रह्मइतिसिद्धांतः तदुक्तमलमतिप्रसंगेन सचाभावश्चतुर्विधः प्रा
गभावः प्रध्वंसाभावोऽत्यंताभावोऽन्योन्याभावश्चेति तत्रमृत्पिंडादौकारणेकार्यस्यघटादेरुत्पत्तेः पूर्वंयोऽभावः सप्रागभावः
सचभविष्यतीतिविषयः तत्रैवघटस्यमुद्गरपातानंतरंयोऽभावः सप्रध्वंसाभावः ध्वंसस्यापिस्वाधिकरणकपालनाशेना
शएव नचघटोन्मज्जनापत्तिः ध्वंसध्वंसस्यापिघटप्रतियोगिकध्वंसत्वात् अन्यथाप्रागभावध्वंसात्मकघटस्यविना
शेप्रागभावोन्मज्जनापत्तिः नचैवमपियत्रध्वंसाधिकरणंनित्यं तत्रकथंध्वंसनाशइतिवाच्यं तादृशमधिकरणंयदि
चैतन्यव्यतिरिक्तं तदातस्यनित्यत्वमसिद्धं ब्रह्मव्यतिरिक्तस्यसर्वस्यब्रह्मज्ञाननिवर्त्यतायाः वक्ष्यमाणत्वात् यदिच
ध्वंसाधिकरणंचैतन्यंतदा असिद्धिः आरोपितप्रतियोगिकध्वंसस्याधिष्ठानेप्रतीयमानस्याधिष्ठानमात्रत्वात् तदुक्तं
अधिष्ठानावशेषोहिनाशः कल्पितवस्तुनइति एवंशुक्तिरूप्यविनाशोपि इदमवच्छिन्नचैतन्यमेव यत्राधिकरणेयस्य
कालत्रयेप्यभावः यथावायौरूपात्यंताभावः सोपिवियदादिवद्ध्वंसप्रतियोग्येव इदमिदंनेतिप्रतीतिविषयोन्योन्याभावः
अयमेवविभागोभेदः पृथक्त्वंचेति व्यवह्रियते भेदातिरिक्तपृथक्त्वादौप्रमाणाभावात् अयंचान्योन्याभावोऽधिकरण
स्यसादित्वेसादिः यथाघटेपटभेदः अधिकरणस्यानादित्वेऽनादिरेव यथाजीवेब्रह्मभेदः ब्रह्मणिजीवभेदः द्विविधोपि
भेदोध्वंसप्रतियोग्येव अविद्यानिवृत्तौतत्परतंत्राणांनिवृत्त्यवश्यंभावात् पुनरपिभेदोद्विविधः सोपाधिकोनिरुपाधिकश्च ।

वे० ति तत्रोपाधिसत्ताव्याप्यसत्ताकत्वं सोपाधिकत्वं तच्छून्यत्वं निरुपाधिकत्वं तत्राद्यो यथा एकस्यैवाकाशस्य घटाद्युपा
प० धिभेदेन भेदः यथा वैकस्य सूर्यस्य जलभाजनभेदेन भेदः तथैवैकस्य ब्रह्मणोऽन्तःकरणभेदाद्भेदः निरुपाधिकभेदो यथा।
१६ घटे पटभेदः न च ब्रह्मण्यपि प्रपंचभेदाभ्युपगमेऽद्वैतविरोधः तात्त्विकभेदादेरनभ्युपगमेन वियदादिवदद्वैताव्याघातक
त्वात् तदुक्तं सुरेश्वराचार्यैः अक्षमा भवतः केयं साधकत्वप्रकल्पने किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितमिति॥
अत एव विवरणेऽविद्यानुमाने प्रागभावव्यतिरिक्तत्वं विशेषणं दत्तं तत्त्वप्रदीपिकायां अविद्यालक्षणे भावत्वं विशेष
णं च संगच्छते एवं चतुर्विधाभावानां योग्यानुपलब्ध्या प्रतीतिः तत्रानुपलब्धिर्मानान्तरं एवमुक्तानां प्रमाणानां प्रामा
ण्यं स्वत एवोत्पद्यते ज्ञायते च तथा हि स्मृत्यनुभवसाधारणं संवादिप्रवृत्त्यनुकूलं तद्वति तत्प्रकारकज्ञानत्वं प्रा।
माण्यं तच्च ज्ञानसामान्यसामग्रीप्रयोज्यं न त्वधिकं गुणमपेक्षते प्रमामात्रेऽनुगतगुणाभावात् नापि प्रत्यक्षप्रमायां भू
योऽवयवेन्द्रियसंनिकर्षः रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात् सत्यपि तस्मिन् पीतः शंख इति प्रत्यक्षस्य भ्रमत्वाच्च॥
अत एव न सल्लिङ्गपरामर्शादिकमपि अनुमित्यादिप्रमायां गुणः असल्लिङ्गपरामर्शादिस्थलेऽपि विषयाबाधेनानुमित्या
देः प्रमात्वात् न चैवं भ्रमस्यापि प्रमा स्यात् ज्ञानसामान्यसामग्र्या विशेषादिति वाच्यं दोषाभावस्यापि हेतुत्वांगीकारात् न चै
वं परतस्त्वं आगन्तुकभावकारणापेक्षायामेव परतस्त्वात् ज्ञायते च प्रामाण्यं स्वतः स्वतोग्राह्यत्वं च दोषाभावे सति या

वत्त्वाश्रयग्राहकसामग्रीग्राह्यत्वं स्वाश्रयोवृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानं तेनवृत्तिज्ञानेगृह्यमाणेतद्गतंप्रामाण्यंगृह्यते।
नचैवंप्रामाण्यसंशयानुपपत्तिः तत्रसंशयानुरोधेनदोषस्यापिसत्त्वेनदोषाभावघटितस्वाश्रयग्राहकाभावेनतत्रप्रामाण्य
स्यैवाग्रहात् यद्वा यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वंस्वतस्त्वं संशयस्थलेप्रामाण्यस्योक्तयोग्यतायाः सत्त्वेनदोषवशे
नाग्रहान्नसंशयानुपपत्तिः अप्रामाण्यंतुनज्ञानसामान्यसामग्रीप्रयोज्यं प्रमायामप्यप्रामाण्यापत्तेः किंतुदोषप्रयोज्यं।
नाप्यप्रामाण्यंयावत्स्वाश्रयग्राहकग्राह्यं अप्रामाण्यघटकतदभाववत्त्वादेर्वृत्तिज्ञानानुपनीतत्वेनसाक्षिणागृहीतुमशक्य
त्वात् किंतुवि संवादिप्रवृत्त्यादिलिंगकानुमित्यादिविषयइतिपरतएवाप्रामाण्यमुत्पद्यते ज्ञायतेच॥ ॥इत्यनुपलब्धि
परिच्छेदः॥ ॥श्रीः एवंनिरूपितानांप्रमाणानांप्रामाण्यंद्विविधं व्यावहारिकतत्त्वावेदकत्वं पारमार्थिकतत्त्वावेदकत्वंचे
ति तत्रब्रह्मस्वरूपानवगाहिप्रमाणव्यतिरिक्तानांसर्वप्रमाणानामाद्यंप्रामाण्यं तद्विषयाणांव्यवहारदशायांबाधाभावात्॥
द्वितीयंतुजीवब्रह्मैक्यपराणां सदेवसोम्येदमग्रआसीत् इत्यादीनांतत्त्वमसीत्यंतानां तद्विषयस्यजीवपरैक्यस्यकालत्रया
बाध्यत्वात् तच्चैक्यंतत्त्वंपदार्थज्ञानाधीनज्ञानमितिप्रथमंतत्पदार्थोलक्षणप्रमाणाभ्यांनिरूप्यते तत्रलक्षणंद्विविधंस्व
रूपलक्षणंतटस्थलक्षणंचेति तत्रस्वरूपमेवलक्षणंस्वरूपलक्षणं यथासत्यंज्ञानमनंतंब्रह्मेति अत्रसत्यादिकंस्वरू
पलक्षणं ननुस्वस्यस्ववृत्तित्वाभावेकथंलक्षणत्वमितिचेन्न स्वस्यैवस्वापेक्षयाधर्मिधर्मभावकल्पनयालक्ष्यलक्षणत्वं

वे० भवात् तदुक्तं पंचपादिकायां आनंदो विषयानुभवो नित्यत्वं चेति संति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासंत इति त
प० टस्थलक्षणं नाम यावल्लक्ष्यकालमनवस्थितत्वे सति यद्व्यावर्तकं तदेव यथा गंधवत्त्वं पृथिवीलक्षणं महाप्रलये परमा
१७ णुषु उत्पत्तिकाले घटादिषु गंधवत्त्वाभावात् प्रकृते च जगज्जन्मादिकारणत्वं अत्र जगत्पदेन कार्यजातं विवक्षितं कारण
त्वं च कर्तृत्वं अतोऽविद्यादौ च नातिव्याप्तिः कर्तृत्वं च तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं ईश्वरस्य तावदु
पादानगोचरापरोक्षज्ञानसद्भावे च यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते इत्यादि
श्रुतिर्मानं तादृशचिकीर्षासद्भावे च सोऽकामयत बहु स्यां प्रजायेयेत्यादिश्रुतिर्मानं तादृशकृतौ च तन्मनोऽकुरुतेत्यादिवाक्यं
ज्ञानेच्छाकृतीनां मध्ये एकैकस्यास्तत्गर्भलक्षणत्रितयं विवक्षितं अन्यथा व्यर्थविशेषणत्वापत्तेः अतएव जन्मस्थिति-
ध्वंसानामन्यतमस्यैव लक्षणे प्रवेशः एवं च लक्षणानि नव संपद्यंते तत्र ब्रह्मणो जगज्जन्मादिकारणत्वे च यतो वा इमानि
भूतानि जायंते इत्यादिश्रुतिर्मानं यद्वा निखिलजगदुपादानत्वं ब्रह्मणो लक्षणं उपादानत्वं च जगदध्यासाधिष्ठानत्वं जगदा
कारेण परिणममानमायाधिष्ठानं वा एतादृशमेवोपादानत्वमभिप्रेत्य इदं सर्वं यदयमात्मा सच्च त्यच्चाभवत् बहु स्यां प्रजा
येयेत्यादिश्रुतिषु ब्रह्मप्रपंचयोस्तादात्म्यव्यपदेशः घटः सन् घटो भाति घट इष्ट इत्यादिलौकिकव्यपदेशोऽपि सच्चिदानंद
रूपब्रह्मैक्याध्यासात् नन्वानंदात्मकचिदध्यासात् घटादेरिष्टत्वव्यवहारे दुःखस्यापि तत्राध्यासात् तत्रापीष्टत्वादिव्य

वहारइतिचेन्न आरोपेसतिनिमित्तानुसरणं नतुनिमित्तमस्तीत्यारोपइत्यभ्युपगमेनदुःखादौसच्चिदंशाध्यासेप्यानंदांश
ध्यासाभावात जगतिनामरूपांशद्वयव्यवहारस्त्वविद्यापरिणामात्मकः नामरूपसंबंधात् तदुक्तम् अस्तिभातिप्रियंरू
पंनामचेत्यंशपंचकं आद्यत्रयंब्रह्मरूपंजगद्रूपंततोद्वयमिति॥ ॥अथजगतोजन्मक्रमोनिरूप्यते॥ ॥तत्रसर्गाद्यका
लेपरमेश्वरःसृज्यमानप्रपंचवैचित्र्यहेतुप्राणिकर्मसहकृतअपरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितःस
न्नामरूपात्मकनिखिलप्रपंचंप्रथमंबुद्धावाकलय्येदंकरिष्यामीतिसंकल्पयति तदैक्षतबहुस्यांप्रजायेयेति सोकाम
यतबहुस्यांप्रजायेय इत्यादिश्रुतेः ततआकाशादीनिपंचभूतान्यपंचीकृतानितन्मात्रपदप्रतिपाद्यान्युत्पाद्यंते तत्राका
शस्यशब्दोगुणः वायोस्तुशब्दस्पर्शौ तेजसस्तुशब्दस्पर्शरूपाणि अपांतुशब्दस्पर्शरूपरसाः पृथिव्यास्तुशब्दस्पर्शरूपर
सगंधाः नतुशब्दस्याकाशमात्रगुणत्वं वाय्वादावपितदुपालंभात् नचासौभ्रमः बाधकाभावात् इमानिचभूतानित्रिगुण
मायाकार्याणित्रिगुणानि एतेभ्यःसत्वगुणोपेतेभ्यस्तैः पृथक्पृथक्क्रमेणपंचभूतैः श्रोत्रत्वक्चक्षुरसनघ्राणानिपंचेंद्रिया
णिचजायंते एतेभ्यःपुनराकाशादिगतसात्विकांशेभ्योमिलितेभ्योमनोबुद्ध्यहंकारचित्तानिचजायंते श्रोत्रादीनांपंचानांक्र
मेणदिग्वातार्कवरुणाश्विनोऽधिष्ठातृदेवताः मनआदीनांचतुर्णांक्रमेणचंद्राच्युतचतुर्मुखशंकरा अधिष्ठातृदेवताः॥
एतैरेवरजोगुणोपेतैः पंचभूतैर्यथाक्रमं वाक्पाणिपादपायूपस्थाख्यानिकर्मेंद्रियाणिजायंते तेषांचक्रमेणवह्नींद्रोपेंद्रम

वे० सुप्रजापतयोधिष्ठातृदेवताः रजोगुणोपेतैः पंचभूतैरेव मिलितैः पंचवायवः प्राणापानव्यानोदानसमानाख्या जायंते तत्रप्रा
प० ग्गमनवान्वायुः प्राणः नासादिस्थानवर्ती अवाग्गमनवान्वायुरपानः पाय्वादिस्थानवर्ती विष्वग्गमनवान्व्यानः अखि
१८ लशरीरवर्ती ऊर्ध्वगमनवानुत्क्रमणवायुरुदानः कंठस्थानवर्ती अशितपीतान्नादिसमीकरणः समानो नाभिस्थानवर्ती
तैरेव तमोगुणोपेतैरपंचीकृतभूतैः पंचीकृतभूतानि जायंते तासां त्रिवृतं त्रिवृतमेकैकं करवाणीति श्रुतेः पंचीकरणोपलक्ष
णार्थत्वात् पंचीकरणप्रकारश्चेत्थं आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य तेषां चतुर्णामंशानां वाय्वा
दिषु चतुर्षु भूतेषु संयोजनं एवं वायुं द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य तेषां चतुर्णामंशानामाकाशादिषु संयो
जनं एवं तेजोबभूमीनामपि तदेवं एकैकभूतस्यार्द्धं स्वांशात्मकमर्द्धांतरं चतुर्विधभूतमयमिति पृथिव्यादौ स्वांशाधिक्या
त्पृथिव्यादिव्यवहारः तदुक्तं वैशेष्यात्तु तद्वादस्तद्वाद इति पूर्वोक्तैरपंचीकृतभूतैर्लिंगशरीरं परलोकयात्रानिर्वाहकं मोक्ष
पर्यंतं स्थायि मनोबुद्धिभ्यामुपेतं ज्ञानेंद्रियपंचककर्मेंद्रियपंचकप्राणादिपंचकसंयुक्तं जायते तदुक्तं पंचप्राणमनोबुद्धि ए०
दशेंद्रियसमन्वितं अपंचीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनमिति तच्च द्विविधं परमपरं च तत्र परं हिरण्यगर्भशरीरम्। १८
अपरमस्मदादिशरीरं तत्र हिरण्यगर्भलिंगशरीरं महत्तत्त्वं अस्मदादिलिंगशरीरं चाहंकार इत्याख्यायते एवं तमोगुणयु
क्तेभ्यः पंचीकृतभूतेभ्यो भूम्यंतरिक्षस्वर्महर्जनस्तपःसत्यात्मकस्योर्द्धलोकसप्तकस्य अतलपातालवितलसुतलतला

तलरसातलमहातलाख्याधोलोकसप्तकस्यब्रह्मांडस्यजरायुजांडजस्वेदजोद्भिज्जाख्यचतुर्विधस्थूलशरीराणांप्रसूतिः त
त्रजरायुजानिजरायुभ्योजातानिमनुष्यपश्वादिशरीराणि अंडजानिपक्षिपन्नगादिशरीराणि स्वेदजानितुस्वेदाज्जातानि
यूकमशकादीनि उद्भिज्जानिचभूमिमुद्भिद्यजातानिवृक्षादीनि वृक्षादीनामपिपापफलभोगायतनत्वेनशरीरत्वं तत्रपरमे
श्वरस्यपंचतन्मात्राद्युत्पत्तौसप्तदशावयवोपेतलिंगशरीरोत्पत्तौचसाक्षात्कर्तृत्वं इतरनिखिलप्रपंचोत्पत्तौचहिरण्यग
र्भद्वारंतस्याभितामाश्रित्य हंताहमिमास्तिस्रोदेवताअनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीतिश्रुतेः॥
हिरण्यगर्भोनाममूर्तित्रयादन्यःप्रथमोजीवःसवैशरीरीप्रथमःसवैपुरुषउच्यते आदिकर्तासभूतानांब्रह्माग्रेसमवर्तत
हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातः पतिरेकआसीदित्यादिश्रुतेः एवंभूतभौतिकसृष्टिर्निरूपिता॥ ॥अथेदानीं
प्रलयोनिरूप्यते॥ ॥प्रलयोनामत्रैलोक्यनाशः सचचतुर्विधः नित्यःप्राकृतिकोनैमित्तिकआत्यंतिकश्चेति तत्रनित्यप्र
लयःसुषुप्तिःतस्याःसकलकार्यप्रलयरूपत्वात् धर्माधर्मपूर्वसंस्काराणांचतदाकारणात्मनावस्थानं तेनसुप्तोत्थितस्यनसु
खदुःखाद्यनुपपत्तिः नवास्मरणानुपपत्तिः नचसुषुप्तावंतःकरणस्यविनाशेतदधीनप्राणादिक्रियानुपपत्तिः — वस्तुतः
श्वासाद्यभावेतदुपलब्धेःपुरुषांतरस्यभ्रममात्रत्वात्सुप्तशरीरोपलंभवत् नचैवंसुप्तस्यपरेतादविशेषः सुप्तस्यहिलिंगश
रीरंसंस्कारात्मनाऽत्रैववर्तते परेतस्यतुलोकांतरइतिवैलक्षण्यात् प्रह्वांतःकरणस्यद्वेशक्तीज्ञानशक्तिःक्रियाशक्ति

प्रेतभमया

वे० श्येति तत्र ज्ञानशक्तिविशिष्टांतःकरणस्य तु सुषुप्तौ विनाशः न क्रियाशक्तिविशिष्टस्येति प्राणाद्यवस्थानमविरुद्धं यदा सुप्तः स्व
प० प्नं न कंचन पश्यति अथास्मिन्प्राण एवैकधा भवति अथैनं वाक् सर्वैर्नामभिः सहाप्येति सता सौम्य तदा संपन्नो भवति स्वमपी
१९ तो भवतीत्यादिश्रुतिरुक्तसुषुप्तौ मानं प्राकृतलयस्तु कार्यब्रह्मविनाशनिमित्तकः सकलकार्यविनाशः यदा प्रागेवोत्पन्न
ब्रह्मसाक्षात्कारस्य कार्यब्रह्मणो ब्रह्मांडाधिकारलक्षणप्रारब्धकर्मसमाप्तौ विदेहकैवल्यात्मिका परममुक्तिः तदा तल्लो
कवासिनामपि उत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह विदेहकैवल्यं ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे परस्यांते कृता
त्मानः प्रविशंति परं पदमिति श्रुतेः एवं स्वलोकवासिभिः सह कार्यब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्मांडतदंतर्वर्तिन्य
खिललोकतदंतर्वर्तिस्थावरादीनां भौतिकानां भूतानां च प्रकृतौ मायायां लयः न ब्रह्मणि बाधरूपविनाशस्यैव ब्रह्मनिष्ठ
त्वात् अतः प्राकृत इत्युच्यते कार्यब्रह्मणो दिवसावसाननिमित्तकस्त्रैलोक्यमात्रप्रलयो नैमित्तिकः प्रलयः ब्रह्मणो दिव
सश्चतुर्युगसहस्रपरिमितः कालः चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यत इति वचनात् प्रलयकालो दिवसकालपरिमि ए०
तः रात्रिकालस्य दिवसतुल्यत्वात् प्राकृतलये नैमित्तिकलये च पुराणवचनानि प्रमाणानि द्विपरार्द्धे त्वतिक्रांते ब्रह्मणः १९
परमेष्ठिनः तदा प्रकृतयः सप्त कल्प्यंते प्रलयाय हि एष प्राकृतिको राजन्प्रलयो यत्र लीयते इति वचनं प्राकृतप्रलये मानं
एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् शेतेनंतासनो नित्यमात्मसात्कृत्य चा लभूरिति वचनं नैमित्तिकप्रलये मानं।

खिलं१

तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः स चैकजीववादे युगपदेव नानाजीववादे तु क्रमेण सर्वे एकीभवंतीत्या
दिश्रुतेः तत्राद्यास्त्रयो विलयाः कर्मविरमनिमित्ताः तुरीयस्तु ज्ञानोदयनिमित्तो लयो ज्ञानेन सह हेतेति शेषः एवं चतुर्वि
धः प्रलयो निरूपितः तस्येदानीं क्रमो निरूप्यते भूतानां भौतिकानां च न कारणलयक्रमेण लयः कारणलयसमये का
र्याणामाश्रयांतराभावेनावस्थानानुपपत्तेः किंतु सृष्टिक्रमविपरीतक्रमेण तत्कार्यनाशे तज्जनकादृष्टनाशस्यैव प्रयोज
कतया उपादाननाशस्याप्रयोजकत्वात् अन्यथा न्यायमतेपि महाप्रलये पृथिवीपरमाणुगतरूपरसादेर्विनाशापत्तेः
तथा च पृथिव्या अप्सु अपां तेजसि तेजसो वायौ वायोराकाशे आकाशस्य जीवाहंकारे तस्य हिरण्यगर्भाहंकारे तस्य चा
विद्यायामित्येवंरूपः प्रलयः तदुक्तं विष्णुपुराणे जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते तेजस्यापः प्रलीयंते तेजो वायौ
प्रलीयते वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते पुरुषान्न परं किंचित्सा काष्ठा
सा परा गतिरित्येवंविधप्रलयकारणत्वं तत्पदार्थस्य ब्रह्मणस्तटस्थलक्षणं ननु वेदांतैर्ब्रह्मणि जगत्कारणत्वेन प्रति
पाद्यमाने सति सप्रपंचं ब्रह्म स्यात् अन्यथा सृष्टिवाक्यानामप्रामाण्यापत्तेरिति चेन्न नहि सृष्टिवाक्यानां सृष्टौ तात्पर्यम्
किंत्वद्वितीये ब्रह्मण्येव तत्प्रतिपत्तौ कथं सृष्टेरुपयोगः इत्थं यदि सृष्टिमनुपन्यस्य प्रपंचनिषेधो ब्रह्मणि प्रतिपाद्येत
तदा ब्रह्मणि निषिद्धस्य प्रपंचस्य वायोः प्रतिषिद्धस्य रूपसेवं ब्रह्मणोन्यत्रावस्थानशंकायां निर्विचिकित्समद्वितीय

कामिवरहि

वे० त्वंनप्रतिपादितंस्यात् ततःसृष्टिवाक्याद्ब्रह्मोपादेयत्वज्ञानेसत्युपादानंविनाकार्यस्यान्यत्रसद्भावशंकायांनिरस्तायां नेति
प० नेतीत्यादिनाब्रह्मण्यर्पितस्यासत्त्वोपपादनेनप्रपंचस्यतुच्छत्वावगमेनिरस्ताखिलद्वैतभ्रममखंडंसच्चिदानंदैकरसंब्रह्मसि
२० ध्यतीतिपरंपरयासृष्टिवाक्यानामपिअद्वितीयेब्रह्मण्येवतात्पर्यं उपासनाप्रकरणपठितसगुणब्रह्मवाक्यानांचोपास
नाविध्यपेक्षितगुणारोपमात्रपरत्वं नगुणपरत्वं निर्गुणप्रकरणपठितानांसगुणवाक्यानांतुनिषेधवाक्यापेक्षित नि
षेध्यसंपादकत्वेनविनियोगइति नकिंचिदपिवाक्यमद्वितीयब्रह्मप्रतिपादनेनविरुध्यते तदेवंस्वरूपतटस्थलक्षण
लक्षितंतत्पदवाच्यमीश्वरचैतन्यंमायाप्रतिबिंबितमितिकेचित् तेषामाशयः जीवपरमेश्वरसाधारणचैतन्यमात्रंबिंबं
तस्यैवबिंबस्याविद्यात्मिकायांमायायांप्रतिबिंबभूतमीश्वरचैतन्यं   अंतःकरणेषुप्रतिबिंबितंजीवचैतन्यं कार्योपाधि
रयंजीवःकारणोपाधिरीश्वरइतिश्रुतेः एतन्मतेजलाशयगतशरावगतसूर्यप्रतिबिंबयोरिवजीवपरमेश्वरयोर्भेदः अवि
द्यात्मकोपाधेर्व्यापकत्वात्तदुपाधिकेश्वरस्यापिव्यापकत्वं अंतःकरणस्यपरिच्छिन्नत्वात्तदुपाधिकजीवस्यापिपरि रा०
च्छिन्नत्वं एतन्मतेऽविद्याकृतदोषाः जीववत्परमेश्वरेऽपिस्युः उपाधेःप्रतिबिंबपक्षपातित्वादिस्वरसात् बिंबात्मका २०
मीश्वरचैतन्यमितिअपरे तेषामयमाशयः एकमेवचैतन्यंबिंबत्वाक्रांतमीश्वरचैतन्यं प्रतिबिंबत्वाक्रांतंजीवचैतन्यं बिंबप्र
तिबिंबकल्पनोपाधिश्च एकजीववादेऽविद्या अनेकजीववादेत्वंतःकरणान्येव अविद्यांतःकरणरूपोपाधिप्रयुक्तोजीवपर

भेदः उपाधिकृतदोषाश्च प्रतिबिंबे जीव एव वर्तते न तु बिंबे परमेश्वरे उपाधेः प्रतिबिंबपक्षपातित्वात् एतन्मते च गगनसूर्यस्य
जलादौ भासमानप्रतिबिंबसूर्यस्येव जीवपरयोर्भेदः ननु ग्रीवास्थमुखस्य दर्पणप्रदेश इव बिंबचैतन्यस्य परमेश्वरस्य जी
वप्रदेशेऽभावात्तस्य सर्वांतर्यामित्वं न स्यादिति चेन्न साभ्रनक्षत्रस्याकाशस्य जलादौ प्रतिबिंबितत्वे सति बिंबभूतमहाकाश
स्यापि जलादिप्रदेशसंबंधदर्शनेन परिच्छिन्नबिंबस्य प्रतिबिंबदेशासंबंधित्वेऽप्यपरिच्छिन्नब्रह्मबिंबस्य प्रतिबिंबदेश
संबंधाविरोधात् न च रूपहीनब्रह्मणो न प्रतिबिंबसंभवः रूपवत एव तथात्वदर्शनादिति वाच्यं ॥ नीरूपस्यापि रूपस्य प्रति
बिंबदर्शनात् न च नीरूपस्य द्रव्यस्य प्रतिबिंबाभावनियमः आत्मनो द्रव्यत्वाभावस्योक्तत्वात् एकधा बहुधा चैव दृश्यते ज
लचंद्रवत् यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोनुगच्छन् इत्यादिवाक्येन ब्रह्मप्रतिबिंबाभावानुमानस्य बा
धितत्वाच्च ॥ तदेवं तत्पदार्थो निरूपितः इदानीं त्वंपदार्थो निरूप्यते ॥ एकजीववादे विद्याप्रतिबिंबो जीवः अनेकजीववा
दे अंतःकरणप्रतिबिंबः स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान् तत्र जाग्रद्दशा नामेंद्रियजन्यज्ञानावस्था अवस्थांतरे इंद्रि
याभावान्नातिव्याप्तिः इन्द्रियजन्यं ज्ञानं चांतःकरणवृत्तिः स्वरूपज्ञानस्यानादित्वात् सा चांतःकरणवृत्तिरावरणतिरोभावार्थे
त्येकं मतं तथा हि अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादिभान
प्रसक्तौ घटावच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतंत्रमवस्थापदवाच्यमभ्युपगंतव्यं एवं सति घटादेर्न सर्वदा भानप्रसंगः

वे॰ प॰ २१

अनाहतचैतन्यसंबंधस्यैवभानप्रयोजकत्वात् ॥ तस्यचावरणस्यसनातनत्वेकदाचिदपिघटभानंनस्यादितितद्भंगेवक्तव्ये
तद्भंगजनकं नचैतन्यमात्रं तद्भासकस्यतदनिवर्तकत्वात् नापिवृत्त्युपहितंचैतन्यं परोक्षस्थलेपितन्निवृत्त्यापत्तेः इति
परोक्षव्यावृत्ततद्वृत्तिविशेषस्यतदुपहितचैतन्यस्य वा आवरणभंगजनकत्वमित्यावरणाभिभवार्थावृत्तिरित्युच्यते संबंधा
र्थावृत्तिरित्यपरंमतं तत्राविद्योपाधिकोपरिच्छिन्नोजीवः सचघटादिप्रदेशेविद्यमानोपिघटाद्याकारपरोक्षवृत्तिविरह
दशायांनघटादिकमवभासयति तदाघटादिनासंबंधाभावात् तत्तदाकारवृत्तिदशायांतुभासयति तदासंबंधस
त्त्वात् ॥ अविद्योपाधिकस्यापरिच्छिन्नस्यजीवस्य स्वतएवसमस्तवस्तुसंबंधस्यवृत्तिविरहदशायांसंबंधाभावाभिधान
मसंगतं असंगत्वश्रुत्यासंबंधाभावाभिधानेच वृत्त्यनंतरमपिसंबंधोनस्यादितिचेत् उच्यते नहिवृत्तिविरहदशायांजी
वस्यघटादिनासहसंबंधसामान्यंनिषेधामः किंतर्हि घटादिभानप्रयोजकंसंबंधविशेषं सचसंबंधविशेषोविषयस्य।
जीवचैतन्यस्याभिव्यंजकतालक्षणः ॥ कदाचित्ततदाकारवृत्तिनिबंधनः तथाहि तैजसमंतःकरणंस्वच्छद्रव्यत्वात्।
स्वतएवजीवचैतन्याभिव्यंजनसमर्थं घटादिकंतुनतथा अस्वच्छद्रव्यत्वात् स्वाकारवृत्तिसंयोगदशायांतुवृत्त्यभिभूतजा
ड्यधर्मकतयावृत्त्युत्थादितचैतन्याभिव्यंजनयोग्यताश्रयतयाचवृत्त्युत्थानानंतरंचैतन्यमभिव्यनक्ति तदुक्तंविवरणे ॥
अंतःकरणंहिस्वस्मिन्निवस्वसंसर्गिण्यपिघटादौचैतन्याभिव्यक्तियोग्यतामापादयतीति दृष्टंचास्वच्छद्रव्यस्यापिस्वच्छ

प॰ २१

वृत्त्यसंबंधदशायांप्रतिबिंबग्राहित्वं यथाकुड्यादेर्जलादिसंयोगदशायांमुखादिप्रतिबिंबग्राहिता घटादेरभिव्यंज
कत्वंच तत्प्रतिबिंबग्राहित्वंचैतन्याभिव्यक्तत्वंच तत्रप्रतिबिंबितत्वं एवंविधाभिव्यंजकत्वसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थ-
लेबहिर्निर्गमनांगीकारः परोक्षस्थलेतुवह्न्यादेर्वृत्तिसंसर्गाभावेनचैतन्यानभिव्यंजकतयानवह्न्यादेरपरोक्षत्वं एतन्मते
चविषयाणामपरोक्षत्वंचैतन्याभिव्यंजकत्वमितिद्रष्टव्यं एवंजीवस्यापरिच्छिन्नत्वेपिवृत्तेःसंबंधार्थत्वंनिरूपितं ॥ इदा
नींपरिच्छिन्नत्वप क्षेसंबंधार्थकत्वंनिरूप्यते ॥ तथाहि अंतःकरणोपाधिकोजीवः तस्यचनघटाद्युपादानता घटादि
देशासंबंधात् किंतुब्रह्मैवघटाद्युपादानं तस्यमायोपहितस्यसकलघटाद्यन्वयित्वात् अतएवब्रह्मणःसर्वज्ञता ॥ तथाच
जीवस्यघटाद्यधिष्ठानब्रह्मचैतन्याभेदमंतरेणघटाद्यवभासासंभवेप्राप्ते तदवभासायघटाद्यधिष्ठानब्रह्मचैतन्याभेदसि
द्ध्यर्थंघटाद्याकारवृत्तिरिष्यते ॥ ननुवृत्तस्यापिकथंप्रमातृचैतन्यविषयचैतन्ययोरभेदःसंपाद्यते घटांतःकरणरूपोपाधिभेदेन
तदवच्छिन्नचैतन्ययोर्भेदासंभवादितिचेन्न वृत्तेर्बहिर्देशनिर्गमनांगीकारेण वृत्त्यंतःकरणविषयाणामेकदेशस्थत्वेनतदु
पाधेयभेदाभावस्योक्तत्वात् एवमपरोक्षस्थलेवृत्तेर्मतभेदेनविनियोग उपपादितः ॥ इन्द्रियाजन्यविषयगोचरापरोक्षांतःक
रणवृत्त्यवस्थास्वप्नावस्था जाग्रदवस्थाव्यावृत्त्यर्थमिंद्रियाजन्येति अविद्यावृत्तिमत्यांसुषुप्तावतिव्याप्तिवारणायांतःकर
णेति सुषुप्तिर्नामाविद्यागोचराविद्यावृत्त्यवस्थाजाग्र त्स्वप्नयोरविद्याकारवृत्तेरंतःकरणवृत्तित्वान्नतत्रातिव्याप्तिः अनं

वे० केचिन्मरणमूर्छयोरवस्थांतरत्वमाहुः अपरे तु सुषुप्तावेव तयोरंतर्भावमाहुः तन्न तयोरवस्थान्तरांतर्भावबहिर्भावयोस्त्वंपदा
प० र्थनिरूपणे उपयोगाभावान्नतत्र प्रयत्यते तस्य च मायोपाध्यपेक्षयैकत्वं अंतःकरणोपाध्यपेक्षया च नानात्वं व्यवह्रियते॥
२२। एतेन जीवस्याणुत्वं प्रत्युक्तं बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट इत्यादौ जीवस्य बुद्धिशब्दवाच्यान्तःकर
णपरिमाणोपाधिकपरिमाणश्रवणात् स च जीवः स्वयंप्रकाशः स्वप्नावस्थामधिकृत्य अत्रायं पुरुषः स्वयंज्योतिरिति श्रु
तेः अनुभवरूपश्च प्रज्ञानघन इति श्रुतेः अनुभवामीति व्यवहारस्तु वृत्तिप्रतिबिंबचैतन्यमादायोपपद्यते एवं त्वंपदार्थो
निरूपितः अधुना तत्त्वंपदार्थयोरैक्यं महावाक्यप्रतिपाद्यमभिधीयते ननु नाहमीश्वर इत्यादिप्रत्यक्षेण किंचिज्ज्ञत्व
सर्वज्ञत्वविरुद्धधर्माश्रयत्वादिलिंगेन द्वा सुपर्णा सयुजावित्यादिश्रुत्या द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च क्षरः सर्वा
णि भूतानि कूटस्थोऽक्षर उच्यते इत्यादिस्मृत्या च जीवपरभेदस्यावगतत्वेन तत्त्वमस्यादिवाक्यमादित्यो यूपो यजमानः प्र
स्तर इत्यादिवाक्यवदुपचरितार्थमेवेति चेन्न भेदप्रत्यक्षस्य संभावितकरणदोषजन्यस्यासंभावितदोषवेदजन्यज्ञाने रा०
न बाध्यमानत्वात् अन्यथा चंद्राधिकपरिमाणग्राहिज्योतिःशास्त्रस्य चंद्रप्रादेशग्राहिप्रत्यक्षेण बाधापत्तेः पाकरक्ते घ २२।१
टे रक्तोऽयं न श्याम इतिवत् सविशेषणे हीति न्यायेन जीवपरभेदग्राहिप्रत्यक्षस्य विशेषणीभूतधर्मभेदविषयत्वाच्च अतो
एवं नानुमानमपि प्रमाणं आगमबाधात् मेरुः पाषाणमयत्वानुमानवत् नाप्यागमांतरविरोधः तत्परातत्परवाक्ययोः।

स्तत्परवाक्यस्य बलवत्त्वेन लोकप्रसिद्धभेदानुवादिद्वासुपर्णादिवाक्यापेक्षयोपक्रमोपसंहाराद्यवगतात्तात्पर्यविशिष्ट
स्यतत्त्वमस्यादिवाक्यस्य प्रबलत्वात् नच जीवपरैक्येपि विरुद्धधर्माश्रयत्वाऽनुपपत्तिः शीतलस्यैव जलस्यौपाधिकौष्ण्या
श्रयत्ववत्स्वभावतो निर्गुणस्यैव जीवस्यांतःकरणाद्युपाधि ककर्तृत्वाद्याश्रयप्रतिभासोपपत्तेः यदि च जलादावौष्ण्य
मारोपितं तदा प्रकृतेपि तुल्यं नच सिद्धांते कर्तृत्वस्य क्वचिदप्यभावादारोप्यप्रमाहितसंस्काराभावे कथमारोप इति वाच्यं
लाघवेनारोप्यविषयसंस्कारत्वेनैव तस्य हेतुत्वात् ॥ नच प्राथमिकारोपे का गतिः कर्तृत्वाद्यध्यासप्रवाहस्यानादित्वात् ॥
तत्त्वंपदवाच्ययोर्विशिष्टयोरैक्यायोगेपि लक्ष्यस्वरूपयोरैक्यमुपपादितमेव अत एव तत्प्रतिपादकतत्त्वमस्यादिवाक्या
नामखंडार्थत्वं सोयमित्यादिवाक्यवत् नच कार्यपराणामेव प्रामाण्यं चैत्र पुत्रस्ते जात इत्यादौ सिद्धेपि संगतिग्रहात् ए
वं सर्वप्रमाणाविरुद्धं श्रुतिस्मृतीतिहासपुराणप्रतिपाद्यं जीवपरैक्यं वेदांतशास्त्रस्य विषय इति सिद्धं ॥ इति विषयपरिच्छे
दः ॥ ॥ इदानीं प्रयोजनं निरूप्यते ॥ ॥ यदवगतं सत् स्ववृत्तितयेष्यते तत्प्रयोजनं तच्च द्विविधं मुख्यं गौणं चेति तत्र सुखं
दुःखाभावो मुख्यं प्रयोजनं तदन्यतरसाधनं गौणं प्रयोजनं सुखं च द्विविधं सातिशयं निरतिशयं चेति तत्र सातिशयं सुखं
विषयानुषंगजनितांतःकरणवृत्तितारतम्यकृतानंदलेशाविर्भावविशेषः एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंती
ति श्रुतेः निरतिशयसुखं ब्रह्मैव आनंदो ब्रह्मेति व्यजानादिति श्रुतेः आनंदात्मकब्रह्मावाप्तिश्च मोक्षः शोकनिवृत्तिश्च ब्रह्म

वे० वेदब्रह्मैव भवति तरति शोकमात्मविदित्यादिश्रुतेः ननु लोकांतरएवाप्तिरेतज्जन्यवैषयिकानंदो वा मोक्षः तस्य कृतकत्वेना
प० नित्यत्वे मुक्तस्य पुनरावृत्त्यापत्तेः ननु त्वन्मतेप्यानंदावाप्तेरनर्थनिवृत्तेश्च सादित्वे तुल्यो दोषः अनादित्वे मोक्षमुद्दिश्य श्रव
२३ णादौ प्रवृत्तिरनुपपत्तिरितिचेत्तन्न ॥ सिद्धस्यैव ब्रह्मस्वरूपस्य मोक्षस्यासिद्धत्वभ्रमेण तत्साधने प्रवृत्त्युपपत्तेः अनर्थनि
वृत्तिरपि अधिष्ठानभूतब्रह्मस्वरूपतया सिद्धैव लोकेपि प्राप्तप्राप्तिपरिहृतपरिहारयोः प्रयोजनत्वं दृष्टमेव यथा हस्तग
तविस्मृतसुवर्णस्यैतद्वहस्ते सुवर्णमित्याप्तोपदेशादप्राप्तमिव प्राप्नोति यथा वा वलयितचरणायां स्रजि सर्पत्वभ्रमवतः ना
यं सर्पइत्याप्तवाक्यादपहृतस्यैव सर्पस्य परिहारः एवं प्राप्तस्याप्यानंदस्य प्राप्तिः परिहृतस्याप्यनर्थस्य निवृत्तिर्मोक्षः प्र
योजनं च स च ज्ञानैकसाध्यः तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनायेति श्रुतेः अज्ञाननिवृत्तेर्ज्ञानैकसा
ध्यत्वनियमाच्च तच्च ज्ञानं ब्रह्मात्मैक्यगोचरं अभयं वै जनक प्राप्तोसि तदात्मानमेव वेदाहं ब्रह्मास्मीति श्रुतेः तत्त्वमस्या
दिवाक्योत्थं ज्ञानं मोक्षस्य साधनमिति नारदीयवचनाच्च तच्च ज्ञानमपरोक्षरूपं परोक्षत्वेऽपरोक्षभ्रमनिवर्तकत्वानुपप प०
त्तेः तच्चापरोक्षं ज्ञानं तत्त्वमस्यादिवाक्यादितिकेचित् मनननिदिध्यासनसंस्कृतांतःकरणादित्यपरे तत्र पूर्वाचार्याणा २३
मयमाशयः संविदापरोक्ष्यं न करणविशेषोत्पत्तिनिबंधनं किंतु प्रमेयविशेषनिबंधनमित्युपपादितं तथा च ब्रह्म
णः प्रमातृजीवाभिन्नतया तद्गोचरशब्दजन्यज्ञानमप्यपरोक्षं अत एव प्रतर्दनाधिकरणे प्रतर्दनं प्रति प्राणोस्मि प्रज्ञा

त्मानं मामायुरमृतमुपास्वेति इन्द्रोक्तवाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चितत्वे सति मामुपास्वेत्यस्य स्वच्छन्दानुपपत्तिमाशं
क्य तदुत्तरत्वेन प्रवृत्तेः शास्त्रदृष्ट्या तूपदेशो वामदेववदित्यत्र सूत्रे शास्त्रीया दृष्टिः शास्त्रदृष्टिरिति तत्त्वमस्यादिवाक्य
जन्यमहं ब्रह्मेति ज्ञानं दृष्टिशब्देनोक्तमिति अन्येषां त्वेवमाशयः करणविशेषनिबंधनमेव ज्ञानानां प्रत्यक्षत्वं नवि
षयविशेषनिबंधनम् एकस्मिन्नेव वस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षाप्रत्यक्षत्वव्यवहारदर्शनात् तथा च संवि
त्साक्षात्त्वे इन्द्रियजन्यत्वस्यैव प्रयोजकतया न शब्दजन्यज्ञानस्यापरोक्षत्वं ब्रह्मसाक्षात्कारेपि मनननिदिध्यासनसंस्कृतम
नस्त्व करणं मनसैवानुद्रष्टव्यमित्यादिश्रुतेः मनोगम्यत्वश्रुतिश्चासंस्कृतमनोविषया न च ब्रह्मण औपनिषदत्वानुपपत्तिः।
अस्मदुक्तमनसो वेदजन्यज्ञानानंतरमेव प्रवृत्ततया वेदोपजीवितत्वात् वेदानुपजीविमानांतरगम्यत्वस्यैव वेदजन्यत्व
विरोधित्वात् शास्त्रदृष्टित्वमपि ब्रह्मविषयमानसप्रत्यक्षस्य शास्त्रप्रयोज्यत्वादुपपद्यते तदुक्तं अपि संराधने सूत्रा
च्छास्त्रार्थध्यानजा प्रमा शास्त्रदृष्टिर्मतेतां तु वेति वाचस्पतिः परमिति तच्च ज्ञानं पापक्षयात् स च कर्मानुष्ठानादिति परंपर
या कर्मणां विनियोगः अत एव तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसानाशकेनेतीत्यादिश्रुतिः॥
कषायैः कर्मभिः पक्वे ततो ज्ञानं प्रवर्तत इत्यादिस्मृतिश्च संगच्छते एवं श्रवणमनननिदिध्यासनान्यपि ज्ञानसाधनानि मैत्रेयी
ब्राह्मणे आत्मा वा रे द्रष्टव्य इति दर्शनमनूद्य तत्साधनत्वेन श्रोतव्यो मंतव्यो निदिध्यासितव्य इति श्रवणमनननिदिध्यास

वे० नानांविधानात् श्रवणंनामवेदांतानांब्रह्मणितात्पर्यावधारणानुकूलमानसीक्रिया मननंनामशब्दावधारितेर्थेमानांतरविरो
प० धिशंकायांतन्निराकरणानुकूलतर्कात्मकज्ञानजनकोमानसोव्यापारः निदिध्यासनंनाम अनादिदुर्वासनयाविषयेष्वाकृ
२५ ष्यमाणस्यचित्तस्य —— विषयेभ्योऽपकृष्यात्मविषयकस्थैर्यानुकूलोमानसोव्यापारः तत्रनिदिध्यासनंब्रह्मसाक्षात्कारेसा
क्षात्कारणंतेध्यानयोगानुगताअपश्यन् देवात्मशक्तिंस्वगुणैर्निगूढामित्यादिश्रुतेः। निदिध्यासनेचमननंहेतुः अकृतमनन
स्यार्थदार्ढ्याभावेनतद्विषयनिदिध्यासनायोगात् मननेचश्रवणंहेतुः श्रवणाभावेतात्पर्यानिश्चयेनशाब्दज्ञानायोगेनश्रुता
र्थविषययुक्तायुक्तत्वनिश्चयानुकूलमननायोगात् एतानित्रीण्यपिज्ञानोत्पत्तौकारणानीत्येतावन्मात्रंकेचिदाचार्याऊचिरे अप
रेतुश्रवणंप्रधानं मनननिदिध्यासनयोस्तुश्रवणात्पराचीनयोरपिश्रवणफलब्रह्मदर्शननिवर्तकतया आरादुपकारकांगमित्या
हुः तदयुक्तंअंगत्वंनतावत् शेषरूपं तस्यश्रुत्याद्यन्यतमप्रमाणगम्यस्यप्रकृतेश्रुत्याद्यभावेऽसंभवात् तथाहि व्रीहिभिर्यजेतदध्ना
जुहोतीत्यादाविवमनननिदिध्यासनयोरंगत्वेनकाचित्तृतीयाश्रुतिरस्ति नापिबर्हिर्देवसदनं दामीत्यादिमंत्राणांबर्हिःखं २०
डनप्रकाशनसामर्थ्यवत्किंचिल्लिंगमस्ति नापिदेशांतरपठितप्रवर्ग्यस्याग्निष्टोमेग्रहणात्कीर्तितवाक्यवत् श्रवणानुवादेनमननं २५
निदिध्यासनयोर्विनियोजकंकिंचिद्वाक्यमस्ति नापिदर्शपूर्णमासाभ्यांस्वर्गकामोयजेतेतिवद्वाक्यावगतफलसाधनताकदर्श
पूर्णमासप्रकरणेप्रयाजादीनामिवफलसाधनत्वेनावगतस्यश्रवणस्यप्रकरणेमनननिदिध्यासनयोराम्नानमस्ति ननुद्रष्टव्य

इतिदर्शनानुवादेनश्रवणेविहितेसतिफलवत्तयाश्रवणप्रकरणेतत्सन्निधानाम्नातयोर्मनननिदिध्यासनयोः प्रयाजन्यायेनप्रक
रणादेवांगतेतिचेन्न ते ध्यानयोगानुगता अपश्यन् इत्यादिश्रुत्यंतरे ध्यानस्यदर्शनसाधनत्वेनावगतस्यांगाकांक्षायांप्रयाज
न्यायेनश्रवणमननयोरेवांगतापत्तेः॥ क्रमसमाख्येचदूरनिरस्ते किंचप्रयाजादावंगत्वविचारः सप्रयोजनः पूर्वपक्षेविकृतिषुन
प्रयाजानुष्ठानं सिद्धांतेतुतत्रापितदनुष्ठानमिति प्रकृतेश्रवणेनकस्यचित्प्रकृतिः येनमनननिदिध्यासनयोस्तत्रानुष्ठानांग
त्वफलंभवेत् तस्मान्नतार्तीयशेषत्वंमनननिदिध्यासनयोः किंतुयथाघटादिकार्येमृत्पिंडादीनांप्रधानकारणता चक्रादीनांसह
कारितेतिप्राधान्याप्राधान्यनिर्देशः तथाश्रवणमनननिदिध्यासनानामपीतिमंतव्यं सूचितंचैतत् हिवरणाचार्यैः शक्तितात्पर्यविशिष्ट
शब्दावधारणंप्रमेयावगमंप्रत्यव्यवधानेनकारणंभवतिप्रमाणस्यप्रमेयावगमंप्रत्यव्यवधानात् मनननिदिध्यासनेतुचित्तस्य
प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेणब्रह्मानुभवहेतुतांप्रतिपद्येतेइतिफलंप्रति अव्यवहितकारण
स्यविशिष्टशब्दावधारणस्यव्यवहितेमनननिदिध्यासनेतदंगेंगीक्रियेतेइति श्रवणादिषुचमुमुक्षूणामधिकारः काम्यकर्म
णिफलकामस्याधिकारित्वात् मुमुक्षायांचनित्यानित्यवस्तुविवेकस्येहामुत्रार्थफलभोगविरागस्य शमदमोपरतितितिक्षास
माधानश्रद्धादीनांविनियोगः अंतरिंद्रियनिग्रहः शमः बहिरिंद्रियनिग्रहोदमः विक्षेपाभावउपरतिः शीतोष्णादिद्वंद्वसह
नंतितिक्षा चित्तैकाग्र्यंसमाधानं गुरुवेदांतवाक्येविश्वासः श्रद्धा अत्रोपरमशब्देनसंन्यासोऽभिधीयते तथाचसंन्यासिनामेव

२० श्रवणाद्यावधिकार इति केचित् अपरेतुउपरमशब्दस्यसंन्यासवाचकत्वाभावाद्विक्षेपाभावमात्रस्यगृहस्थेपिसंभवात् जनका
५० देरपिब्रह्मविचारस्यश्रूयमाणत्वात्सर्वाश्रमसाधारणंश्रवणादिविधानमित्याहुः सगुणोपासनमपिचित्तैकाग्र्यद्वारानिर्विशेषब्रह्मसा
२५ त्कारेहेतुः तदुक्तं निर्विशेषंपरंब्रह्मसाक्षात्कर्तुमनीश्वराः येमंदास्तेनुकंप्यंते सविशेषनिरूपणैः वशीकृतेमनस्येषांसगुणब्रह्मशी
लनात् तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनमिति सगुणोपासकानांचार्चिरादिमार्गेणब्रह्मलोकंगतानांतत्रैवश्रवणाद्युत्पन्नतत्त्वसाक्षा
त्काराणांब्रह्मणासहमोक्षः कर्मिणांधूममार्गेणपितृलोकंगतानांउपभोगेनकर्मक्षयेसतिपूर्वकृतसुकृतदुष्कृतानुसारेणब्राह्मणादिस्थाव
रांतेषुपुनरुत्पत्तिः तथाचश्रुतिः रमणीयचरणारमणीयांयोनिमापद्यंते कपूयचरणाःकपूयांयोनिमापद्यंतइति॥ प्रतिषिद्धानुष्ठायिनांतु
रौरवादिनरकविशेषेषुतत्तत्पापोचिततीव्रदुःखमनुभूयश्वशूकरादितिर्यग्योनिषुस्थावरादिषुचोत्पत्तिरिति अलमतिप्रसंगेन निर्गुणब्रह्म
साक्षात्कारवतस्तुनलोकांतरगमनं नतस्यप्राणाउत्क्रामंतीतिश्रुतेः किंतुयावत्प्रारब्धक्षयंसुखदुःखेअनुभूयपश्चादपवृज्यते ननुक्षीयंते
चास्यकर्माणितस्मिन्दृष्टेपरावरइत्यादिश्रुत्या ज्ञानाग्निः सर्वकर्माणिभस्मसात्कुरुतेर्जुनेतिस्मृत्याचज्ञानस्यसकलकर्मक्षयहेतुत्वनिश्चये २०
सतिप्रारब्धकर्मावस्थानमनुपपन्नमितिचेन्न तस्यतावदेवचिरंयावन्नविमोक्ष्येथसंपत्स्यइत्यादिश्रुत्यानाभुक्तंक्षीयतेकर्मेत्यादिस्मृत्या २५
चोत्पादितकार्यकर्मव्यतिरिक्तानांसंचितकर्मणामेवज्ञानविनाश्यत्वावगमात् संचितंद्विविधंसुकृतंदुष्कृतंचेति तथाचश्रुतिः तस्यपुत्रा
दायमुपयंतिसुहृदःसाधुकृत्यांद्विषंतःपापकृत्यामिति॥ ननुब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौतत्कार्यप्रारब्धकर्मणोपिनिवृत्तिः कथंज्ञानिनो

वे० देहधारणमुपपद्यतइतिचेन्न अप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्तकतयाप्रारब्धकर्मरूपप्रतिबंधकदशायामज्ञाननिवृत्तेरनंगीकारात नन्वेव
५० मपितत्त्वज्ञानादेकस्यमुक्तौसर्वमुक्तिःस्यात अविद्यायाएकत्वेतन्निवृत्तौक्वचिदपिसंसारायोगादितिचेन्न इष्टापत्तेरित्येके अपरेत्वेतद्दोष
२५ परिहारायैवइंद्रोमायाभिरितिबहुवचनश्रुत्यनुगृहीतमविद्यानानात्वमंगीकर्तव्यमित्याहुः अन्येत्वेकैवाविद्यातस्याश्चाविद्यायाजीवभे
देनब्रह्मस्वरूपावरणशक्तयोनाना तथाच यस्यब्रह्मज्ञानंतस्यब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशः नत्वन्यंप्रतिब्रह्मस्वरूपावरण
शक्तिविशिष्टाविद्यानाशइत्यभ्युपगमान्नैकमुक्तौसर्वमुक्तिः अतएवयावदधिकारमवस्थितिराधिकारिणामित्यस्मिन्नधिकरणे अधिका
रिपुरुषाणामुत्पन्नतत्त्वज्ञानानामिंद्रादीनांदेहधारणानुपपत्तिमाशंक्याधिकारापादकप्रारब्धकर्मसमाप्त्यनंतरंविदेहकैवल्यमिति
सिद्धांतितं तदुक्तंवाचस्पतिमिश्रैः उपासनादिसंसिद्धितोषितेश्वरचोदितं अधिकारंसमाप्यैतेप्रविशंतिपरंपदमिति॥एतच्चैकमुक्तौसर्वमु
क्तिरितिपक्षेनोपपद्यते तस्मादेकाविद्यापक्षेपिप्रतिजीवमावरणभेदोपगमेनव्यवस्थोपपादनीया तदेवंब्रह्मज्ञानान्मोक्षः मोक्षश्चानर्थ
निवृत्तिः निरतिशयब्रह्मानंदावाप्तिश्चेतिसिद्धंप्रयोजनम्॥ ॥इतिधर्मराजाध्वरींद्रदीक्षितविरचितायांवेदांतपरिभाषायांप्रयोजन
निरूपणंनामाष्टमःपरिच्छेदःसमाप्तः॥ ॥शुभम्भूयात्॥ ॥वाराणसीप्रसादस्यनियोगेनप्रयत्नतः काशीसंस्कृतमुद्रायामङ्कितो
यंशिलाक्षरैः १ श्रीकाशीजीमेज्ञानवापीकेपूर्वफाटकपरश्रीविश्वनाथजीकेपासमहाराजशिवलालदुवेजीकेमकानमेकाशीसंस्कृ रा०
तमुद्रायंत्रमेछपीजिनकोलेनाहोयउनकोइसकार्यकेसंपादक श्रीबाबूवाराणसीप्रसादजीकेपासयाकचौरीगलीमेभाईमताप २६
सिंहजीकेदुकानपरमिलैगी॥ ॥संवत १९३५॥ मितिमाघसुदी१० रविवार तारीख१ माहे फरवरी सन् १८७९ ईसवी॥

